# संगमनी

# Sangamani

Sanskrit Quarterly

संस्कृत-त्रैमासिकी

द्वितीयवर्षे प्रथमोऽङ्कः

श्रावणः, २०२३ वैक्रमाब्दः



सम्पादकः

**प्रभात शास्त्री**

सहसम्पादकौ

**तारिणीश झाः**
व्याकरणवेदान्ताचार्यः

**जयशङ्कर त्रिपाठी**
साहित्याचार्यः, एम्० ए०



प्रयागस्थ-संस्कृत-साहित्य-परिषदः प्रकाशनम्

कार्यालयः
संगमनी
दारागंज—प्रयागः

वार्षिकं मूल्यम्
रु० ५·००
प्रत्यङ्कम् रु० १·५०

परामर्श-समज्या

डॉ० हरवंशलाल शर्मा (अलीगढ़म्)

श्रीबालकृष्णराव: ( प्रयाग: )



लक्ष्यं योजना च

- इयं संगमनी संस्कृतस्य नि:स्वार्थसेवाया नामान्तरम् ।
- अस्यां संस्कृतवाङ्मयविषये गवेषणापूर्ण-लेखानां परिचर्चायाश्च प्रकाशनम्,
- संस्कृतभाषाया अप्रकाशितग्रन्थस्य च प्रकाशनम् भवति ।
- अनया संस्कृतवाङ्मयस्य संस्कृतभाषायाश्च प्रचाराय प्रसाराय च प्रयत्नो विधीयते ।

# संगमनी

अहं राष्ट्री संगमनी वसूनाम्

—ऋग्वेदे १०।१२५।३

२ वर्षे • संवत् २०२३ वि०, श्रावणः • १ अङ्कः

## पायात्

•

पायाद् वो मधुकैटभासुरवधे
विष्णुप्रबोधोद्धुरो
धाता, वक्त्रचतुष्टयं तु युगपद्
यस्याभवत्सार्थकम् ।
एकं स्तौति मुखं शिवामितर—
दप्यार्तं वरान् याचते,
दैत्यौ प्रत्यपरं वितर्जति हरत्य—
न्यच्छिय: संभ्रमम् ॥

—सूक्तिकवेर्वसन्तदेवस्य

## वाणि ! वीणां मा निनादय

श्रीप्रभातमिश्रः

त्वं हससि हृष्यसि मनसि रे !
तव जनाः क्षुधया म्रियन्ते,
अम्ब ! रोदिहि तव सुताः
ह ह हा ! विलास-विधि ध्रियन्ते।
मा मुधाऽऽत्मानं प्रवादय, वाणि ! वीणां मा निनादय।
क्वाऽस्ति व्यासः क्वाऽस्ति भासः,
क्वाऽस्ति रे ! तव कालिदासः,
रोचते मातर्न ते
हर्षात्मकः कश्चिद् विलासः
निजमुखं संप्रति विषादय, वाणि ! वीणां मा निनादय।
नाऽस्ति भुवि विक्रम उदारः,
नाऽस्ति तव नव-रत्न-हारः,
उच्छ्वससि जीवसि कथञ्चित्
किं पुनः सुस्वर-विचारः।
आग्रह-ग्रस्ते ! न वादय, वाणि ! वीणां मा निनादय।



## मेघागमे

सूक्तिसिद्धानां
प्राक्तनकवीनाम्

सामोदा वकुलैः कदम्बमुकुलैः प्रीत्येव रोमाञ्चिता
नीरन्ध्रं पिहिता पयोदपटलैः श्यामोत्तरीया इव ।
दूरीकृत्य च नूपुराविव रिपून्हंसान्समुत्कूजतो
याताः क्वाप्यभिसारिका इव दिशो मेघागमे सोत्सुकाः ॥

—श्रीकण्ठस्य

निपीय स्वच्छन्दं जलमुदरपूरं भरवशाद्
विषण्णोऽतिक्लेशात्क्षितिधरशिलालम्बितवपुः ।
मुहुर्विद्युद्वल्लीवलितरसनो निःस्वनमिषाद्—
भृशारब्धोद्गारं वमति जलभारं जलधरः ॥

—जलचन्द्रस्य

व्याप्यान्तरीक्षककुभावनुभूभृदग्रं
सान्द्रान्धकारगहनासु निशासु गर्जन् ।

संवीक्षते विरहिणः क इह ध्रियन्ते
वर्षासु विद्युदुरुदीपिकयेव मेघः ।।

—लोष्टसर्वज्ञस्य

इह गुरुजलभारपूर्णगर्भाः
प्रदरदरी-भ्रम-भूरिभीमवेगाः ।
तट - कटकनियुध्यमानवेणी—
द्विगुणमहारवभैरवास्तटिन्यः ।।

—त्रिपुरारेः

केदारे नवावारिपूर्णजठरे किञ्चित्क्वणद्दर्दुरे ।
शम्बूकाण्डकपिण्डपाण्डुरततप्रान्तस्थली - वीरणे ।।
डिम्भा दण्डकपाणयः प्रतिदिशं पङ्कच्छटार्चचिता-
श्चुभ्रूश्चुभ्रुरिति भ्रमन्ति रभसादुद्यायिमत्स्योत्सुकाः ।।

—अभिनन्दस्य



# दर्शनेऽभिनवचिन्तनं परमार्थदर्शनम्

श्रीकेदारनाथ श्रोझाः

बहुविधवाणीवृत्तोऽनेकापारशास्त्रपारदृश्वा, कविताकामिनीललितवल्लभः, तर्ककर्कशविचारचातुरीतुरीवितीर्णपाण्डित्यपटो, विभिन्नेषु विषयेषु सरसतया सरलया च सुरगिराहेलयैव विविधमौलिकनिबन्धानां निबद्धा, परतन्त्रेऽपि भारते विचारे स्वतन्त्रः, प्राचीनाचार्येषु श्रद्धापरवशोऽपि दोषज्ञः, मूलान्वेषी, समुदारचेता, मर्मग्राही, वक्तृविशेषनिःस्पृहः, क्षीरनीरविवेकी, सारस्वतहंसः, निर्व्याजसुरगवीसमुपासकः, स्वर्गीयपण्डितश्रीरामावतारशर्मा अस्या विंशशताब्द्याः पूर्वार्धे एव अभिनवमिदम् अनिदर्शनं सुदर्शनं परमार्थदर्शनं सुरगवीपदेषु प्रासारयत्।

अद्वितीय एवायं भूदेवः कृतसंस्कृतसेवो देवगवीसमाराधक इति वचो न केषाञ्चित् कोपाय न वा प्राचामाक्षेपाय भवेत् किन्तु सर्वथा सत्यार्थकम्। पश्यन्तु पाठकाः, प्राचाम् आचार्याणां सविधे शास्त्रप्रसाराय अर्थस्य यशसो वा अधिगमाय सुरसरस्वती एव शरणमभवत् न आङ्गलभाषा इव प्रजाराजप्रिया देशविदेशविद्योतिनी धनेन यशसा च विमोहिनी कापि भाषा बभूव, यत्र तेषां लेखनी विहरेत्। विंशशताब्द्यान्तु राजमहिषीव मनीषिमनोमोहिनी प्राच्यप्रतीच्यविपणीवीथीषु विचरन्ती अंग्रेजीगीरेवं नृत्यं दर्शितवती येन तन्मुग्धा भारतीया अपि विद्वांसो

विदेशीयभाषाविपणौ मातरमपि सुरगवीं तद्धृदयानीव शास्त्रविपयाँश्च निर्दयं विक्रीय धनिनो यशस्विनो मनस्विनश्च अभवन् भवन्ति च। तदानीमेव धन्यो वदान्योऽयं विज्ञवरो विदेशीयभाषा-प्राङ्गणपरिशीलनपटुरपि सुरभारतीभावबद्धो धनादिपरिग्रहपरिपन्थी अपि देशे विदेशे यत्र कुत्रापि विप्रकीर्णानां समीचीनविषयाणां संङ्ग्रहग्रहिलो विदेशीयभाषायै भारतीयं हृदयं शास्त्रं न विक्रीतवान्। अपि तु सर्वविधैरपि ज्ञानरसैः सुरसरस्वतीमेव अस्नपयद् इति कोऽन्योऽस्य सुरगवीसमुपासनायां तुलामधिरोहेत् ?।

अस्य च महापुरुषस्य काव्यनाटकादीनि दरभङ्गामिथिलासंस्कृतविद्यापीठतः क्रमशः प्रकाशयितुं समारब्धानि संस्कृतप्रणयिनां मनोमोदमेष्यन्ति।

परमार्थदर्शनग्रन्थस्तु दर्शनविषयाणां महान् आकरः। यत्र (४४६) षट्चत्वारिंशदधिकचतुश्शतकसूत्राणां विरचनाकला सूत्रप्रणयिन ऋषीन् स्मारयति। प्राञ्जलं भाष्यन्तु अस्य भाष्यशैल्या पातञ्जलं महाभाष्यमेव। यद्यप्यमुद्रितस्यास्य अल्पीयांस एवांशा मया दृष्टास्तावताऽपि रीत्यनुकृतिकला महीयसी अस्य विदुषः साक्षात् कृता। तत्रापि दार्शनिकपदार्थपथे प्रसरन्त्यपि अस्य सरस्वती समुचितसदृशशब्दसमुद्रनामस्य प्रथयति, अमुकपदसमवधाने नैकपर्यायेष्वपि अस्यैव पदस्य समभिव्याहारो मनोहारीति विषये मुद्रिते सति वाचस्पतेरिव वाचस्पत्यमस्य साक्षात्क्रियेत सुरसरस्वतीसमुपासकैः। परं दुर्निवारे सुरगवीदुर्दिनेऽस्मिन् कदा आयास्यति अस्य प्रकाशनशुभावसरः?

श्लोकवार्तिकानुसारिणां पद्यबद्धानां वार्तिकानां षड्विंशत्यधिकाष्टशतसंख्याकानां (८२६) प्रणयनमस्य कुमारिलभट्टतां भासयति। प्रकृष्टरोचना अधिकरणविंशत्यधिकशतसंख्याक—(१२०) न्यायमालारचना जैमिनिन्यायमालामनुहरति। ऐतिहासिकाः सूत्रकालो भाष्यकालो वार्तिक-

कालश्चेत्यादिक्रमेण विकाशं निर्णयन्ति। परमस्मिन् परमार्थदर्शनीय-ग्रन्थे युगपदेव समेषां सर्जनं सर्वविधं पाण्डित्यं समुद्द्योतयति।

एतेषु वार्तिकयुता अधिकरणन्यायमाला त्रयोदशाधिकैकोनविशंति-शततमे (१९१३) ईशाब्दे काशीस्थमहामण्डलमुद्रणालयतः कथमपि प्रकाश-मुपगताऽस्ति।

तत एव च भूयसो दर्शनस्यास्य मम परिचयः, अधिकरणन्यायमालायाः समाप्तिपद्यमिदम्—

**'आलीव रामेण मनोज्ञबन्धा, विनिर्मितेयं लघुरत्नमाला।'**

वार्तिकस्य हि द्विधा सम्प्रदायः। किमपि हि वार्तिकं भाष्यं व्याख्याति, अपरं च सूत्राणि विवृण्वद् भाष्येण व्याख्यायते। अत्र हि तृतीयः क्रमः, स्वतन्त्रो हि वार्तिकग्रन्थो न कस्यचिद् व्याख्यानरूपः। भाष्यसारांशः सरलेन सुन्दरेण पद्येन उद्ध्रियते। एतादृशस्य स्वतन्त्रग्रन्थस्य प्राचीन-तरशैल्या निर्माणमुपद्वादशशताब्द्या अनन्तरमतिचिरेण समभूदिति अभिनवं सुरगवीनवनीतमिदं कस्य सहृदयस्य संस्कृतरसिकस्य तोषाय न भवेत्। यद्यपि जीवस्य विनाशित्वं जन्मान्तराऽस्वीकारश्चेति नास्तिक-कल्पन्तथापि तदपि अवलोकनीयतया निरसनीयतया च संस्कृतविदुषा-मपेक्षितमिति क्व अन्यत्र उपलभ्येत? पटनाविश्वविद्यालयदर्शनविभा-गाध्यक्ष. श्रीहरिमोहन झा महोदयः विदेशीयहेंगलदर्शनस्य प्रभावोऽ-त्रेति ब्रवीति। तदा हन्त अवश्यमवलोकनीयमिदम्। अन्यथा कुत्र-प्राप्स्याम. सरससुरसरस्वतीवीचिपणिप्रसारितानि महार्घाणि वैदेशिक-दर्शनवस्तूनि? एवञ्च भाषाकौतुकेन विषयलिप्सया च असाधारणं संस्कृतरत्नमिदम्। चार्वाकदर्शनस्य पूर्तिमेव प्रथमं चतुर्थाध्यायद्वितीया-ह्निकसप्तमाधिकरणमवलोकयन्तु पाठकाः :—

**स्तन्यचूषकशक्त्यादि पैतृकं वान्यजन्मजम्?**
**जन्मान्तराभ्यासजं तत्स्फुटमुक्तं मनीषिभिः ॥१॥**

पैतृकन्तु मनुष्याद्याकृतिवत्तत्समञ्जसम् ।
अलं तदर्थं जीवस्य जन्मान्तरविकल्पनैः ॥२॥

शरीराध्यात्मवादे बालस्य स्तन्यपाने प्रवृत्तिर्न स्यादित्युच्यते ग्रन्थकारैः। तदुपरि कल्पनेयमस्य। अस्यापि खण्डनमस्तीति त्वन्यत्। नायं चार्वाकपक्षपाती प्रामाण्यनिरूपणे चार्वाकमुखमुद्रणात्। नापि नास्तिक एव नित्यस्य विभोश्चैतन्यस्य स्वीकारात्। नापि वेदनिन्दकोऽहैतुकविधेः स्वतः प्रमाण्याङ्गीकारात्।

अतः परं सृष्टिप्रक्रिया द्वितीयाध्यायद्वितीयाह्निके द्रष्टव्या, मूलोपनिषदः सृष्टिप्रक्रिया आधुनिकवैज्ञानिकप्रक्रियाऽनुकूलैव। 'तद्यदपांशर आसीत्तत्समहन्यत सा पृथिव्यभवत्' इत्युपनिषदः शरशब्दार्थं विवृण्वद् ब्रवीति चतुर्थमधिकरणम्

य औपनिषदः सर्गस्तस्य वैज्ञानिकाद् भिदा।
समन्वयो वा भेदः स्याद् भूतादिक्रमभेदतः ॥१॥
वैचित्र्ये शाश्वतेऽप्यत्र व्यक्तेः सर्गक्रमः स्थितः।
समन्वयश्च तत्रास्ति प्राचां वैज्ञानिकैः सह ॥२॥

वार्तिकानि तत्र

भज्यमानपरिधावधाराऽके तस्य केन्द्रमभवद् विभाकरः।
सृज्यते स्म च ततः क्रमाद् ग्रहोपग्रहादिनिकरो नभोऽङ्गणे ॥११॥
निःसरत्सु रवितो ग्रहेष्वयं भूग्रहोऽपि समये विनिर्गतः।
तप्तवाष्पमपपिण्डतां दधत्प्राणमत्स्थितिविरोधिनीं चिरम् ॥१२॥
वाष्पवायुमपतेजसः शनैरुष्मनिर्गमभवैस्ततो घनैः।
सान्द्रवारिपरिणामिभिः कृता भूरियं सलिलपूरसंप्लुता ॥१३॥

**सान्द्रतां यति च वारिणः शरे प्रस्तरीभवति सागरैर्नगैः ।**
**व्यज्यमानविलसन्नतोन्नता कामिनीव वसुधा व्यराजत ॥१४॥**
**तप्तकेन्द्रपिठरा शिलास्तरप्रायवारिशरवेष्टनोद्धता ।**
**भूरभूत्क्रमविकाशशालिभिर्भूरिजीवनिकरैरथाचिता ॥१७॥**
**सर्गमौपनिषदं त्वमूलिकां कल्पनामथ नरादिमूर्तिताम् ।**
**स्रष्टुरत्र किल कल्पयन्निये दुर्धियस्त उभयेऽत्र धिक्कृताः ॥१८॥**

शरशब्दार्थः सूर्यः स एव ब्रह्मा स्वयंभूरिति तृतीयाधिकरणे वार्तिकम्

**तप्तवाष्पपटलादथेदृशात्सारमण्डमुदभूत्कुतश्चन ।**
**ब्राह्ममण्डमिति यद्विपश्चितः कीर्तयन्ति महसा हिरण्मयम् ॥७॥**
**तद्विभज्यत च यात्यनेहसि प्रादुरास च रविस्तदनन्तरे ।**
**व्युट्यतश्च परिधेर्ग्रहादयो जज्ञिरेऽस्य वियदङ्गणाश्रयाः ॥८॥**
**इत्थमेष तपनो मृताराडजो रश्मिभिश्च किल सर्वतोमुखः ।**
**एष सौरजगतश्च सर्जनाद् विश्वसृड् विदित एष च स्वभूः ॥९॥**

पाखण्डमतखण्डनं दर्शनस्यास्य प्रथममुद्देश्यं तत् प्रथमाध्यायप्रथमाह्निके वार्तिकैर्वर्णयति—

**यत्प्रत्यक्षोपलम्भेनानुमितार्थेन वा पुनः ।**
**प्रत्याहतं तन्मिथ्यैव न तस्यानुगमः शुभः ॥६२॥**
**नगरं दर्शयामीति प्रतिज्ञाय यथा व्रजन् ।**
**जनोऽनुगम्यते बालैर्न पुनः सरितं विशन् ॥६३॥**

व्याकृतिं पाठयामीति पाठयन्ननुगम्यते ।
मन्त्रसिद्ध्या भवेर्विज्ञ इत्युक्तौ समुपेक्ष्यते ॥६४॥
शास्त्राभ्यासेन शिल्पेन समुद्योगैस्तथापरैः ।
न भक्त्या सिद्धमूर्खाणां वास्तवी सिद्धिराप्यते ॥६७॥
जुगप्समानाः सम्मानाद् ब्राह्मणा ब्रह्मवादिनः ।
शिल्पशास्त्रकलोद्योगैः सिद्धिं व्याचक्षते पराम् ॥७०॥
प्रामाण्यमविधौ नैव परिनिष्ठितवस्तुनि ।
शब्दस्येत्यविजानन् हि विमुह्यति मुहुर्मुहुः ॥७८॥
वत्सानयफलानीति स्वाध्यायोऽध्येय इत्यपि ।
सद्यो हेत्वनपेक्षैव पित्राद्याज्ञा विधीयते ॥८०॥

सहेतुकभक्तेर्निन्दनं द्वितीयाध्याय-प्रथमाह्निकद्वितीयाधिकरणे—

भक्तेर्बीजं पितृत्वादि बाह्यहेत्वनपेक्षणात् ।
यद् बाह्यफलसापेक्षं तद्वाणिज्यं स्फुटं मतम् ॥२॥

वार्तिकम्

नृपे जनन्यां जनके गुरौ तथा परेऽपि च श्रेयसि कोपि योऽद्भुतः ।
हृदेकगम्योऽतिशयः स केवलं नरेषु भक्तेरिह बीजमुच्यते ॥६॥
प्रतारयत्सु प्रचुरान्मृषोक्तिभिर्न सिद्धधूर्तेषुतु भक्तिमान् भवेत् ।
अमीषु भक्त्या स्वजनं हि सादयन् पतत्यवश्यं निरये विपन्मये
॥७॥
अयं पुरा खेदयतीति जाग्रतीं निरस्य शङ्कां तनयं प्रपुष्णते ।

अहेतुकं सेवनमाचरत्परं श्रमेण पित्रोः समुपैति निष्कृतिम्
॥१०॥

अरूपमज्ञं जडमन्धमुद्धतं पतिं निजं वा जनकं निषेवते।
कलत्रतोकादि यथा तथा वयं स्वपूर्वजत्वेन चिरन्तनान् नुमः
॥१७॥

व्रणांस्तु भक्तोऽपि यथाऽवधानवान् गुरोः पितुर्वा विदयं विदारयेत्। चिरन्तनानामपि निष्ठुरस्तथा परीक्षको दोषमुदस्यति ध्रुवम् ॥१८॥

यथा तु सभ्याः पितरः कृतोद्यमाः स्वकालिकानां विदुषां धुरि स्थिताः।
तथाद्य विज्ञानविदां धुरीणतां स्वबन्धुताया घटयेम यत्नतः
॥२०॥

कर्मसंन्यासमरोचयन् स्वकर्मणि प्रवृत्तये भृशं प्रोत्साहयति चतुर्थाध्यायद्वितीयाह्निकद्वादशाधिकरणे वार्तिकैः—

स्वर्गादिचिन्तारहितस्तदित्थं विज्ञानदृष्ट्या जगतः शिवाय।
ज्ञानेन भक्त्या च विशुद्धचित्तः सत्कर्म कुर्वीत सदैव साधुः॥६४॥
अयं जनो नैव परस्तु कश्चिद्यः स्वार्थमित्थं प्रतिपद्यकर्मी।
भूमानमानन्दमयं भ्रमेण विवेश्य सोऽल्पीयसि बन्धमेति ॥६६॥
अस्थायिलोकस्य शरीरनाम्नः परस्य लोकस्य च भूमनाम्नः।
अंशांशिभावन्तु विदन् महात्मा सर्वस्य मुक्तः कुशलं करोति
॥६७॥

**इदं हि धर्मार्थ-सुखस्य साधनं शरीरमाद्यं न ममत्वमत्र च ।**
**कथं तदेतत्सकलात्मनो धनं विनाशयेत् स्वैरसकर्मणा सुधीः ॥७०॥**

अनपेक्ष्य विधेः प्रामाण्यम् प्रथमाध्यायप्रथमाह्निकचतुर्थाधिकरणे —

**अनपेक्ष्योपपत्तित्वाद्विधिः स्वीक्रियतां जनैः ।**
**अपेक्षितोपपत्तित्वादर्थवादः परीक्ष्यताम् ॥२॥**

नियन्तुः सर्वज्ञस्य सर्वशक्तेरनङ्गीकारात् प्रायो नास्तिकतां द्योतयतीति चतुर्थाध्यायप्रथमाह्निकवार्तिकेषु—

**चेतनमचेतनञ्च प्रकृतौ उभयं यतो दृष्टम् ।**
**न च सर्वज्ञः कश्चिद्विभाव्यते सर्वशक्तिर्वा ॥७२॥**
**नियता ननु विनियम्या प्रकृतिर्दृष्टा यतश्चैषा ।**
**तस्मात्प्रकृतेर्भिन्नो न नियन्तास्यास्तु कोऽप्यस्ति ॥७६॥**

चतुर्थाध्यायद्वितीयाह्निके तृतीयाधिकरणे परलोकगमनस्य खण्डनम् -

**स्वर्गाधिकारी स्वमतेन सर्वैः परैः प्रपन्नो नरकाधिकारी ।**
**कस्यार्थवादेषु तदीदृशेषु वचः प्रमाणं भविता जनस्य ॥१६॥**
**स्वर्गाद्यभावेऽपि शिखादिकस्य त्यागो न निष्कारणधर्मभाजाम् ।**
**तडित्प्रवेशाय सुरस्त्रियै वा तद्यस्य निर्वेदमुपैतु सोऽज्ञः ॥१७॥**

तत्रैव चतुर्थाधिकरणे जीवस्य स्वरूपविनाशयोर्वर्णनम्—

**सर्वात्मके ब्रह्मणि काययष्टिर्वियत्यमेये किल नालिकेव ।**
**सूचीप्रचारस्वनशक्तिवच्च कायानुगा राजति जीवशक्तिः ॥१८॥**

**वियत्समं स्थाणु च सर्वगं च देहात्कथं ब्रह्म परैतु देहम् ।**
**शरीरमेतन्ननु नालिकेव शीर्यत्यवश्यं गमनं न तस्य ॥१९॥**
**पुञ्जोद्भवत्वाद् भविता क्व जीवः पुञ्जे विशीर्णे निधनस्य काले ।**
**नाशं व्रजन्त्यां नहि नालिकायां तस्याः स्वनं चुम्बति नालिकान्या ॥२०॥**

सर्वधूमज्ञानं विना वह्निव्याप्तज्ञानं न भविष्यतीति चार्वाकस्य पूर्वपक्षम् एकेन नखनिकृन्तनेन ज्ञातेन सर्वं कृष्णायः संज्ञातं भवतीत्यादिवेदान्तवाक्यमुखेन तदुत्तरञ्च प्रतिपादयति--

**ज्ञाने सर्वस्य धूमादेर्व्याप्तिज्ञानं न चान्यथा ।**
**इति चार्वाककल्पस्तु सर्वथा व्याहतः स्फुटम् ॥८१॥**
**एकस्य नखकर्तस्य ज्ञानात् कार्ष्णायसं नृणाम् ।**
**विज्ञातं सर्वमेव स्यादित्यारुणिरपीक्षते ॥८२॥१।२।७।**

स्वर्गादिविषये ४।२।८ अधिकरणे -

**तस्मादियं काञ्चन पर्वताभा प्रकल्पना स्वर्नरयादिकानाम् ।**
**ऊर्ध्वं सुमेरावबलिम्पशैले पूरे पयोधेर्वसुधोदरे वा ॥४७॥**
**धर्मे यथार्थं किल बालिशानां सत्येति तां केचन घोषयन्ति ।**
**आपातरम्यं सुफलं मृषोक्तेस्तन्न स्मरन्तः प्रतिरोचयन्ते ॥४८॥**

प्रमाणविषये १।१।२ अधिकरणे—

**प्रमाणमस्ति वा नास्ति नास्ति सर्वविलोपतः ।**
**अर्थोऽस्ति परिणामेऽपि प्रमाणत्रयगोचरः ॥१॥**

प्रत्यक्षमनुमानञ्च तथाप्ताज्ञेति तत्त्रयम् ।
तस्मात्प्रमाणमस्त्येव सहकारि परस्परम् ॥२॥

वार्तिकम्,

यः प्रत्यक्षोपलम्भेनानुमितार्थेन वा पुनः ।
व्याहतोऽपरमार्थः स प्रहेयः पारमार्थिकैः ॥२०॥
प्रत्यक्षे चानुमाने च कदाचिद् बाधसम्भवः ।
तस्मात्तु नाविधावन्यत् प्रमाणं भवितुं क्षमम् ॥२१॥
चरणाभ्यां प्रचरतः सति स्खलनसम्भवे ।
कः पुनर्नासयागन्तु मनुन्मत्तोऽध्यवस्यति ॥२२॥
आज्ञानुष्ठीयते पुत्रैः पितॄणां जीवतां यथा ।
मृतेष्वपि तदादेशान्निवापो न तु तृप्तये ॥२५॥

श्राद्धं स्वीकरोति ।

अस्य दर्शनस्य आधारविषये सूत्रम् ऋष्युपनिषद्वासुदेवबादरायण-वैश्वानरपूर्वत्वमनुशासनस्य ६ । २ । ३४ ।

प्रमत्तव्याख्यातृविकलीकृते जगत्यभ्यासनिरासोऽनुशासनस्य परमं प्रयोजनम् ६ । २ । ३६ ।

अधिकरणम्—

एतद्दर्शनतत्त्वानि पूर्वैर्दृष्टानि वा न वा ।
न दृष्टान्येव भिन्ना हि गतिरस्योपलभ्यते ॥१॥
दृष्टानि पूर्वजैर्नूनमृषिप्रभृतिभिश्चिरात् ।
संग्रहोऽयं कृतस्तेषां स एवाभिनवः स्फुटम् ॥२॥

वार्तिकानि—

ऋषिरुपनिषदश्च वासुदेवः स च भगवानथ बादरायणश्च ।
सुविमलमतिरार्यवल्लभश्च प्रकटममी परमार्थिनश्चिरत्नाः
॥४४॥

उपदिदिशुरमी पृथक् पृथग्यत् पितृचरणैर्गुरुभिश्च यत्तथोक्तम् ।
अखिलमिति परीक्ष्य तत्प्रणीतं नवमनुशासनमेतदात्मतुष्ट्यै
॥४५॥

अयं समाम्नाय उदेति पूर्वजोपदेशमम्लानमवलम्ब्य निर्मितः ।
जनादितो भूम्नि भवात्मकेऽपितो यदात्मिका यस्य समष्टि-
रूजता ॥४६॥

यद् व्याहृतं तु विदितं जनतासु हन्त ऋष्यादिनामभिरपि
प्रसभं स्वचित्तात् ।
एतन्निरस्य सुमतिः परमार्थभक्तः सम्यग्विवर्द्धयति तत् पितृभिः
कृतं यत् ॥४८॥

न कपिलमुनिकाले ब्रह्मसूत्राण्यतिष्ठन्
कपिलमतमपश्यद् ब्रह्मसूत्रप्रणेता ॥
कपिल इह सदोषोऽपि प्रशस्योऽसहायो
ननु कपिलसहायो ब्रह्मसूत्रप्रणेता ॥५३॥

सति महति सहाये न स्तुतिः सम्प्रणेतुः
कृतिरपि तु तदीया श्रेयसी कार्यकाले ।
शतिनमधनपुत्र श्लाघमानोऽपि तातम्
भजति निजसहस्रे नूनमास्थां सहस्री ॥५४॥

पञ्चमाध्यायप्रथमाह्निके वेदान्तिनामिव स्वप्रकाशं चैतन्यं साधयति प्रथमाधिकरणेनापरमद्विमाधिकरणै: स्वाभाविकं चैतन्यस्य वैचित्र्यं परिवर्तनञ्च मायां विनैव वर्णयति —

प्रथमाधिकरणम्—

**चितो निषेधसंशीति विषयत्वं भवेन्नवा ?**
**सर्वत्र संशये सर्वाभावे वा संभवेदिदम् ॥१॥**
**संशयो वा निषेधो वानुपलब्धो न सम्भवेत् ।**
**उपलब्धिस्वरूपायां सम्भवो नैतयोश्चितौ ॥२॥**

वार्तिकेऽपीदमेव —

**चिदियं निषेधविषयो न भवेन्नच संशयस्य विषयःकिल सा ।**
**उभयं चिदात्मकमिदं हि यतश्चिदतोऽक्षरात्मकतयाधिगता ॥४॥**
**यदि सर्वमस्ति चितिरस्ति तदाऽनुपलब्धिरस्ति विषयो हि कथम् ।**
**अथ नास्ति सर्वमुपलब्धिरियं न चितिर्निषेधविषयस्तुतः ॥५॥**

तृतीयाधिकरणेन सदातने वैचित्र्यं दर्शयति—

**लुप्तेऽप्येकत्र वैचित्र्ये परेषामिह दर्शनात् ।**
**सृष्टेरनाद्यनन्तत्वाद् ब्रह्मवैचित्र्यवत्सदा ॥२॥**

वार्तिकम्—

**समुदेति बुद्बुदतरङ्गनिभं सकलं स्वसाक्षिणि चिदम्बुनिधौ ।**
**प्रविलीयते पुनरिहैव यतः सकलात्मतास्फुटममुष्य यतः ॥१२॥**
**समुदेतु वा विलयमेत्वपि वा परिणाम एक इह साक्षितनौ ।**
**परिणाममात्रविकलस्तु न सोऽविरतोर्मिकःकिल चिदम्बुनिधिः ॥१४॥**

चतुर्थाधिकरणे वैचित्र्यस्य पारमार्थिकत्वम्—

**पारमार्थिकमेवेदं व्याघातरहितं यतः ।**
**विलोपाद्वस्त्वसन्नैव न मर्त्यत्वात्सुतो ह्यसन् ।।२।।**

मायाया भ्रमरूपत्वम् पञ्चमाधिकरणे—

**मायाऽनादिरनिर्वाच्या सतो व्यतिकरोऽथ वा ।**
**अस्त्वनादिरनिर्वाच्या भिक्षवोऽपि तथा विदुः ।।१।।**
**सतो व्यतिकरस्त्वेषा यस्या नामान्तरं भ्रमः ।**
**नासतो विद्यते भावो नाभावो विद्यते सतः ।।२।।**

असतो नाध्यास इति वार्तिकेन वक्ति २२-२३ वार्तिके—

**सति कुत्रचिद् यदितरस्य सतः प्रतिपत्तिरिष्टमिदमध्यसनम् ।**
**असतस्तु नापि सति नैव सतोऽसति जातु चिद्भ्रम इह प्रथितः ।।२२।।**
**न कदापि सद् यदि जगद् वदसि स्मृतिरप्यमुष्य कथमाविरभूत् ।**
**अनुभूतपूर्वविषयस्मरणं विषये परत्र तव चाध्यसनम् ।।२३।।**

ज्ञानिनां कर्माचरणविषये षष्ठमधिकरणम्—

**ज्ञानेऽपि कर्मसातत्यमुच्छेदः कर्मणोऽपि वा ?**
**ज्ञाने कर्म न सम्भाव्यं भवत्येतदहन्तया ।।१।।**
**ज्ञानेऽपि कर्मसातत्यं न्यायपूर्वन्तु तद् भवेत् ।**
**नाकर्म वासुदेवस्य जीवन्मुक्तस्य योगिनः ।।२।।**

तत्रत्यं वार्तिकम्--

**तनये निजे सममतौ जनकौ न परस्य पुत्रमुपलालयति ।**
**अथ स प्रशास्तृपदवीं तु भजन् स्वसुतं परतश्च समौ भवति**
**॥२६॥**

**ज्ञतया तथैव समतां दधतः क्षतपक्षपोतमखिलं चरतः ।**
**तनुरक्षणं भवति विज्ञतया सकलात्मनस्तनुमिमां विदतः ॥२८॥**

चेतना परमेश्वराभिन्ना प्रकृतिरिति सप्तमाधिकरणे

**प्रकृतिर्नियतैवेयं विनियम्या न केनचित् ।**
**सर्वाकारेश्वराभिन्ना सावित्येव विनिश्चयः ॥२॥**

**सपरिच्छिदा प्रकृतिरंशधिया निखिला तु न प्रमितिमर्हति सा ।**
**अपरिच्छिदा चितिमयी प्रकृतिर्बत राजमजस्य निखिलात्मसमा**
**॥३७॥**

**पुरुषस्य या प्रकृतितस्तु भिदा कपिलप्रमादलहरी ननु सा ।**
**विविनक्ति हन्त पुरुषं प्रकृतेर्बत ते मुनिर्विस्मरत्स्वमिव ॥३८॥**

नैयायिकानां कालसम्बन्धित्वमिव सतो लक्षणं प्रथमाध्यायप्रथमाह्निकवार्तिके —

**यत्कदाप्यस्ति तत्सर्वं सदित्येव विनिश्चयः ।**
**क्षणिकत्वं स्थिरत्वं वा सत्तायामप्रयोजकम् ॥२५॥**

परिचयार्थं कानिचिद् भाष्यवाक्यानि समुद्धरामि—कानि पुनः परमार्थानुशासनस्य प्रयोजनानि ? संग्रहविवेकव्यवस्थोद्योगानाग्रहोदयाः प्रयोजनम् । संग्रहस्तावत् ऋषिर्ब्राह्मणं सूत्राणि व्याख्यानान्यनु चेति भारते शास्त्रक्रमः । तत्र विविधानि प्रायः परस्परविसंवादीनि विज्ञानानि ।

तानि समन्वयदर्शिभियाज्ञवल्क्यवासुदेवबादरायणवैश्वानरप्रभृतिभिः पुनः पुनः परीक्ष्य जनेषु प्रख्यापितानि प्रमत्तैर्व्याख्यातृभिस्तु मुहुर्मुहुः विप्लावितानि, तानि संग्रहान्तरमपेक्षन्ते कालवशात् विज्ञानतत्त्वानि च नवाविष्कृतानि सुबहूनि असंगृहीतान्यस्मदीयैरद्यापि तान्यपि संग्रहं प्रतीक्षन्ते । स संग्रहोऽत्र सूत्रकृता विहितः । ऋष्यादिविस्तरे दुर्व्याख्यान-गहनेऽभिनवे च व्यतिकीर्णे विज्ञानप्रपञ्चे तत्त्वसंग्रहो दुष्करः । अत्र पुन सुखेन तत्त्वसंग्रहो भविष्यति । तस्मात्संग्रहार्थमध्येयं परमार्थानुशासनम् ।

एवमेव विवेकव्यवस्थाप्रभृतीनां पञ्चानां व्याख्यानं विधाय पुनराह— इमानि खलु भूयः परमार्थानुशासनस्य प्रयोजनानि । इयं मित्रभूः, अहं मनुः, स्थाणुरयम् । उत त्वं सख्ये । कलिः शयानः, हिरण्मयेन, असूर्या-नाम, धर्मार्थौ, पुराणमिति, या शिल्पशास्त्रादिप्रतारकाणाम् । इदं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् । एकं सद्विप्रा बहुधा वदन्ति अग्निं यमं मातरिश्वानमाहुः, एकं सद् बहु वैचित्र्यं विजानन्तो विप्राः स्युरित्यध्येयं परमार्थानुशासनम् । इदं मित्रम् इत्यादिभाष्यलक्षण-लक्षितम् महाभाष्यमनुहरति भाष्यम् ।

इत्थञ्चात्र चिन्तयामि—बालकस्य स्तन्यपाने प्रवृत्तिं प्रति पित्रोरभ्यासं शरीराकृतिमिव हेतुं निर्देशयति, तत्र आकृतयः परम्परया भूतनिष्पन्ना-स्तत्र जनकयोः कारणत्वं युक्तं, किन्तु बुभुक्षावशादिष्टसाधनताज्ञान-जन्या प्रवृत्तिस्तु चेतनस्य कथं नाम भौतिकी संभवेत् ? न च भूतनिष्पन्नं चार्वाकस्येव चैतन्यं नित्यचैतन्याङ्गीकारात्, कथमन्यथा पितृभ्यामभ्यस्ता अन्ये विषयाः न स्फुरेयुः ? अन्येषान्तु परलोकमङ्गीकुर्वाणानां कार्यानुमेय-वैचित्र्यम् अदृष्टमेव नियामकम्, अनुभवस्मरणे हि चैतन्यं बिना न संभवतः ।

जन्मान्तरानभ्युपगमोऽपि न सम्यक् प्रतिभाति, अन्येऽपि दार्शनिकाः शरीरविनाशेऽपि जन्मान्तरं स्वीकुर्वन्ति, तथा अत्रापि कथन्न स्यात् । यस्तु नित्यचेतनः काययष्टिनालिकायां प्रविष्टो जीवतामापन्नस्तादृश

नालिकायां विशीर्यन्त्यामपि स्वयमविनश्यन् कथन्न शरीरान्तरग्रहणं जन्मान्तरमनुभवति ?, विनाशं यन्ती काययष्टिर्न जीवः किन्तु तदुपाधिकश्चेतनः, न च उपधेयो विनश्यति, नैयायिकानामात्मनि अदृष्टमिव इदमपि दर्शनं चेतने वैचित्र्यमनुभवति, न्यायस्य नित्यं परमाणुमन इव सांख्यस्य बुद्धिरिव च शरीरान्तरमनुसरत् किमपि नाङ्गीकरोतीति प्रतिभाति, स्फुटन्तु सम्पूर्णभाष्यपर्यालोचनया सेत्स्यति । प्रायो वैदेशिकदर्शनानि शरीरावयवमेव शरीरसमानयोगक्षेमं मस्तिष्कशब्दवाच्यमुररीकुर्वन्ति तत एव सर्वं व्यवहारमुपपादयन्ति । परं नित्यं चैतन्यं किमपि न स्पृशन्ति, इदन्तु दर्शनं तादृशं चैतन्यमङ्गीकुर्वत् न तादृङ्मस्तिष्केण सर्वं व्यवहारमुपपादयेत्, मस्तिष्कस्य प्रायोजडप्रकाशतामेव मन्वीत । मनुते चेत् तादृगेव स्थवीयः स्यात् । तथाहि न विश्वसितु नाम जन्ममरणपरम्परया शरीरान्तरसम्पर्कं परन्तु बालयौवनस्थविरभावेषु स्फुटः शरीरभेदः परिमाणगुरुत्वादिभिः स्फुटं भेदात्, तदेवेदं शरीरमिति प्रत्यभिज्ञया प्रत्यक्षबाधप्रतिहतया शरीराभेदप्रतिज्ञानं न दार्शनिकस्य स्यात् । बालावस्थायामविद्यमानैः पाश्चाज्जातैः खाद्यपदार्थैर्युवस्थविरशरीरयोर्जायमानत्वात्, कारणभेदे च कार्यभेदस्य अवश्यं पातात् । कौमारस्यापि काचिदाकृतिरनुवृत्ता प्रतिभाति चेत् भिन्नाऽपि प्रतिभाति, कारणान्तरजन्यत्वात्पूर्वप्रतिमानस्य भ्रमत्वं कल्प्यताम्,। केचन कौमारशरीरस्यापि सूक्ष्मा अवयवविशेषा उत्तरशरीरेषु कारणमिति चेदस्तु तथापि तेन किं स्यात् ? न बालशरीरमेव स्थविरशरीरम्, शरीरस्य भेदे मस्तिष्कस्यापि भेदः, कथमन्यथा युवमस्तिष्कं बालापेक्षया अधिकग्राहि ? ननु आरम्भवादे वृद्ध्यपचयाभ्यां वस्तुभेदः,परिणामवादे तु गुणादीनामेव परिवर्तनमितिवाच्यम् । नैतत्सारम्, गुणा अपि कारणानि ये बालमस्तिष्के गुणा न ते युवमस्तिष्के, तथा बाल्येऽधीतस्य यौवने स्मरणं न स्यात् । न सम्भवः शरीरभेदे शरीरावयवस्थमस्ति कस्याभेदइति। अभेदे वा विभिन्नकार्यकारित्वस्यानुपपत्तिः, तथा च स्थिरं शरीरतदवयवभिन्नं

चेतनं विना नैहिकमपि कार्यं संभवतीति तादृशाभ्युपगमे जन्मान्तराभ्युपगमेन बाधः।

सृष्टेरनाद्यानन्तत्वादेकवैचित्र्यस्य विरामेऽपि वैचित्र्यान्तरस्योदयात् विचित्रमेव विभु भूमेति अन्येऽपि स्वीकुर्वन्ति, वेदान्तिनो मायावैचित्र्यवशात्। सांख्या अविवेकात्, प्रकृतिवैचित्र्यात्, प्रत्यभिज्ञायां विमर्शपदार्थवैचित्र्यवशात्। नैयायिका गुणपरिवर्तनं प्रतिपादयन्ति। गुणगुणिनोर्भेदात् नित्यत्वं परिरक्षन्ति। अत्र स्वभाविकं वैचित्र्यमभ्युपगम्यत इति विशेषः। तत्रापि क्रमिकमनन्तवैचित्र्यं तथापि तस्य कथं नित्यत्वमिति न प्रतिभाति। तथाहि—वैचित्र्यं वैचित्र्यवतो भिन्नमभिन्नं वा ?, प्रथमे वैचित्र्यस्य कारणं वैचित्र्यवानेव तद्भिन्नं सहकारि वा ? नाद्यः समेषां वैचित्र्याणां युगपदुत्पादप्रसङ्गात् समर्थस्य क्षेपायोगात्, द्वितीये चेतनभिन्नप्रकृतिसिद्ध्या सांख्यमतखण्डनासम्भवात्। प्रथमविकल्पद्वितीये अनेकात्मकस्यैकत्वायोगात्।

यद्यपि कालिदासः कविः 'त्वामेव प्रकृतिमाहुः पुरुषार्थप्रवर्तनीम्। तद् दर्शिनमुदासीनं त्वामेव पुरुषं विदुः' इत्यादिना प्रकृतिपुरुषयोरैक्यं वर्णयति तथापि तद् दर्शिनमित्यादिना दृग्दृश्यत्वेन विवेकं प्रदर्शयति एव। अविवेकादेव द्वयोरद्वैतं दर्शयति। दृश्यं जडमितिव्याप्तेरव्यभिचाराद् दृश्यभिन्नद्रष्टुः सिद्धेः कपिलमतमपि सम्यगेवास्ति। व्रततिविसृमरत्वयोरशांशिभावः, अतस्तयोर्न विवेकः। जडादृश्या च प्रकृतिर्न द्रष्टुरपरिणामिनः कूटस्थस्यांश इति तयोः कथं न विवेकः ?।

सद्वस्तुन एव कुत्रचित् सदन्तरेऽध्यासः, असतः स्मृतिरेव कथं समुदेत् ? इति अस्य मतम्। अध्यस्तस्य मिथ्यात्वमेव, अधिष्ठानस्य तु अधिष्ठेयापेक्षया सत्यत्वमिति वेदान्तग्रन्थेषु सयुक्ति समुपपादितमस्ति, तेषां समन्वयः खण्डनम् उपेक्षा वेति भाष्यावलोकनं विना न निर्णेतुं शक्यत इति विरम्यत एव तादृशविवेचनायाः।

---

# स जनास इन्द्रः

डॉ० रामेश्वरप्रसाद मिश्रः

निखिलज्ञानकोषाधारभूतवेदेषु दैविकशक्तेः सर्वातिशायित्ववर्णनं प्रचुररूपेण दृश्यते । विविधभावात्मकसूक्तैः मन्त्रद्रष्टारो देवानां स्तुतिमकुर्वन् । बहुदेवतावादात्मकदृष्ट्या विराट्स्वरूपस्य भगवतोऽङ्गभूततया देवानां तस्यैव सर्वव्यापकपरब्रह्मणः सर्वत्र स्तुतिर्विहिता । "सर्वं खलु इदं ब्रह्म" "तत्त्वमसि" "पुरुष एवेदं सर्वं यद्भूतं यच्च भाव्यम् । उतामृतत्वस्येशानो यदन्नेनातिरोहति" ( पु० सू० २ ) इत्यादि प्रतिपादितब्रह्ममहिम्ना तस्य सर्वव्यापकत्वं सर्वेश्वरत्वञ्च निश्चप्रचमेव । सर्वे देवाश्च तस्य प्रतीक रूपाः स्तुत्याः भवन्ति । अतएव विभिन्नशक्तिप्रतीकरूपेण देवानां पृथक्-पृथक् स्वरूपं प्रकल्प्य तेषां स्तवनं सामान्यतो वेदस्य प्रधानविषयोऽस्ति ।

वैदिकसाहित्यानुशीलनपटुर्यास्काचार्यः स्थानदृष्ट्या देवानां वर्गीकरणं सम्पादयन् स्वर्गान्तरिक्षभूस्थानीयरूपेण विभागत्रयमकरोत् । तत्र प्रधानरूपेण स्वर्गस्थानीयो विष्णुः, अन्तरिक्षस्थानीयश्च तत्रेन्द्रः, भूस्थानीयश्चाग्निः । अन्तरिक्षस्थानीयस्य सर्वाधिकप्रसिद्धिः । स च परमसम्माननीयो राष्ट्रियदेवोऽस्ति । ऋग्वेदे गृत्समदाख्यो मन्त्रद्रष्टा स्वप्रत्यक्षीकृतेन्द्रसूक्तेऽस्मिन्निन्द्रदेवस्य साधुपरिचयमदात् । तदितिहासो बृहद्देवतायामुक्तः, यथा —

**संयुज्य तपसात्मानमैन्द्रं बिभ्रन्महावपुः**
**अदृश्यत मुहूर्तेन दिवि च व्योम्नि चेह च ।**
**तमिन्द्र इति मत्वा तु दैत्यौ भीमपराक्रमौ**
**धुनिश्च चुमुरिश्चोभौ सायुधावभिपेततुः**

पुरा अयं वृष्टिविघ्नकारकाणां विघातकरूपेण विद्युद्देवतारूपेण च सम्मानित आसीत् । मानवजीवनोपयोगिसमस्तवस्तूनां स प्रदाता जलवर्षणस्य चाधिष्ठाताऽस्ति । यथा—

**यस्याश्वासः प्रदिशि यस्य गावो**
**यस्य ग्रामा यस्य विश्वे रथासः ।**
**यः सूर्यं य उषसं जजान**
**यो अपां नेता स जनास इन्द्रः ।**

सर्वे वाहनादयस्तस्य वशवर्तिनः । स एव सूर्यमुषसं जनयति, जनानां प्रेरकश्चास्ति । शत्रुभिः सह युद्धेषु मानवानां देवानां च शक्तिप्रदानेन सहायतां करोति । आर्याणां संरक्षणं विधाय तेषां निसर्गशत्रून् हिनस्ति । मनुष्य इवेन्द्रः सोमपानं करोति । बृहद्दहनुर्विशालबाहुः स स्वविशाल-गदया शत्रून् चूर्णयति । दधीस्थिभिस्त्वष्ट्रा निर्मितं वज्रं धारयति । युद्धसंलग्नोभयपक्षस्थिताः सर्वे महारथाः तामिन्द्रमेव स्वरक्षणाय स्तुवन्ति समाह्वानं च कुर्वन्ति । न ते तत्सहायतां विना विजयिनो भवन्ति । अत एवेन्द्रः विश्वस्य प्रतिनिधिः कथ्यते । एतादृशशक्तिसम्पन्नतयैव स पर्वतानपि निपीड्य ततः सलिलधारां प्रवर्तयति । तदुक्तम् ऋग्वेदे—

**यस्मान्न ऋते विजयन्ते जनासः**
**यं युध्यमाना अवसे हवन्ते ।**

**यो विश्वस्य प्रतिमानं बभूव**
**यो अच्युतच्युत्स जनास इन्द्रः ।**

इन्द्रस्य द्यौः पितास्ति । अग्निः पूषा चेति द्वौ भ्रातरौ स्तः । मरुद्-गणाश्चास्य सहायकाः सन्ति । ते युद्धादिषु स्वस्वामिन इन्द्रस्यादेशं माल्यमिव स्वीकृत्य बद्धपरिकराः पुरुषार्थं प्रदर्शयन्ति । अतएव च **"मरुत्वान्"** इति नाम्नापि जनैराहूयते । इन्द्राणी चास्य पत्नी शक्तिरूपा सौभाग्य-प्रदायिनी वर्तते । सा च विवाहादिषु सौभाग्याकाङ्क्षिणीभिः श्रद्धया पूजिता भवति । शक्तिप्रधानतयैव शचीपतिरूपेण विजेतृतया शतक्रतु-रूपेण च सस्तूयते । सोमपानोपलब्धशक्तिः स मरुद्गणैः सह वर्षासु विघ्नोत्पादकं वृत्रासुरं हिनस्ति । यदा खलु तदिन्द्रस्य वृत्रासुरेण सह युद्धं भवति तदा सर्वे लोकाः प्रकम्पिता भवन्ति । कम्पमानान् पर्वतादीन् स्थिरान् कृत्वा भूमिं समतलां च विधाय तत्राद्दश्यवस्तूनि प्रत्यक्षीकृत्य स्वोपासकेभ्यो धनधान्यादिकं वितरति । द्यावापृथिव्यौ चेमं नमतः । अस्य शक्तेः पर्वतादयो बिभ्यति । पूजनसोमपानदानसंलग्नयजमानायेन्द्रः सर्वतोभावेन वृद्धिं प्रयच्छति । यथा -

**यः सुन्वन्तमवति यः पचन्तं**
**यः शंसन्तं यः शशमानमूती ।**
**यस्य ब्रह्म वर्धनं यस्य सोमो**
**यस्येदं राधः स जनास इन्द्रः ॥**

वैदिकसाहित्येषु वृत्रेन्द्रयोः स्वाभाविकशत्रुरूपेण वर्णनमुपलभ्यते । शम्बरासुरेणापि चास्य महती शत्रुतासीत् । इन्द्रः चत्वारिंशद् वर्षाणि यावत् पर्वतेषु भयादात्मानमलक्षितं कृत्वा स्थितं शम्बरंश्रमेणान्विष्य तेन सह युद्धं कृत्वा तं हतवान् । अतएव च गृत्समदः स्वपुरतः प्रत्यक्षी-भवन्तमिन्द्रमुद्दिश्य कथयति—"दुर्धर्षप्रभावशाली यः सोमाभिषवं कुर्वते

यजमानाय वाजमन्नं बलं वा वितरति, स खलु सत्यभूतः। वयं सर्वे पुत्र-पौत्रसमन्विताऽस्येन्द्रस्य स्तुतिं वदेम" यथा—

**यः सुन्वते पचते दुध्र आचिद्**
**वाजं दर्दर्षि स किलासि सत्यः।**
**वयं त इन्द्र विश्वह प्रियासः**
**सुवीरासो विदथमा वदेम॥**

ऋग्वेदे चैका कथान्द्रसूक्तविषयमवलम्ब्य प्रसिद्धास्ति। एकदा गृत्समदस्य यज्ञे वज्रबाहुरिन्द्रः सहायं विनैवाजगाम। तं चासुराः निःसहायं मत्वा हननायागताः। ज्ञात्वा चैतदिन्द्रो गृत्समदस्य रूपमास्थाय बहिर्निर्गतः। यज्ञे पुनरपिहगृत्समदं दृष्ट्वा सन्दे बुद्ध्या तमेवेन्द्रं मत्वा यदा ते तं हन्तुमुद्यतास्तदा गृत्समदः स्वजीवनस्य रक्षणार्थं तेषामसुराणां हृदि विश्वासोत्पादनाय शक्तिसम्पन्नेन्द्रस्य वर्णनं चकार। नाहमिन्द्र इत्यादिकथनैरात्मानं रक्षयामास।

ऋग्वेदे हिरण्यस्तूपाभिधेयो मन्त्रद्रष्टापि तत्रेन्द्रसूक्ते विभिन्नप्रकारेणेन्द्रस्य गौरवं सर्वशक्तिसम्पन्नत्वं च वर्णयामास। वज्रपाणिरिन्द्रः समेषां शासकः नेमिं चक्रारपङ्क्तिरिव सर्वानावृत्य तिष्ठति। यथा—

**इन्द्रो यातोऽवसितस्य राजा**
**शमस्य च शृङ्गिणो वज्रबाहुः।**
**सेदु राजा क्षयति चर्षणीना-**
**मरान्न नेमिः परि ता बभूव॥ (ऋ० १।३२।१५)**

तैत्तिरीयब्राह्मणेऽपि देवानामुत्पत्तिप्रसङ्गे प्रजापतित एव सर्वेषामुत्पत्तिर्दर्शिता। किन्तु तत्रेन्द्रस्योत्पत्तिः प्रजापतितः न वर्णिता दृश्यते। अन्यदेवापेक्षया चेन्द्रस्याकृतिः स्वभावश्च मनुष्यजातेराकृत्या प्रकृत्या चाधिकं

साम्यमादधाति । शक्रतु:, शक्र:, शचीपति:, वज्रबाहु:, इत्यादि तत्रेन्द्रवाचकशब्दा: तस्य सर्वशक्तिसम्पन्नत्वं प्रथयन्ति । श्रीमहर्षिदयानन्दमहोदयस्तु तत्रार्यसमाजधर्मदृष्ट्या समुद्घोषयन्ति यद् वेदे सर्वोऽयं देवत्वकल्पनाविषयकविचार: सर्वथालङ्कारिकोऽस्ति । तन्मते इन्द्र: प्राणस्य प्रतीकोऽस्ति, जीवनदोषाणां पराजय एवासुरपराजयोऽस्ति । ऋग्वेदे स्वर्णादिकान्तियुक्तवस्तूनामिन्द्रपदेन व्यवहारो दृश्यते । अतएव च निरुक्तकारेणोक्तं यद् बलयुक्तोदीप्तिशालीपदार्थं इन्द्रपदेन व्यवह्रियते । इयमेव चेन्द्रव्यापकता । किन्तु विचारणा चेयं व्यक्तिगतभावनानुकूलैव नतु सार्वत्रिकी । पश्चात् पौराणिकयुगे देवाधिपतिरूपेणेन्द्रस्य भागवतादिषु बहुशो वर्णनमुपलभ्यते । स सहस्राक्ष इति कथ्यते । पौराणिकगाथानुसारं गौतमजायाहिल्यासौन्दर्यमुग्धबुद्धिरिन्द्रो यदा निशीथवेलायां कपटकुक्कुटरूपेण महर्षि विबोध्य गङ्गास्नानंकर्तुं विवासयामास । किन्तु गौतम: तत्र गत्वा निशीथवेलेयमिति निश्चयीकृत्य स्वावासं प्रतिनिवृत्त: । विलोकयामास च मघवन्तमपथदसपदं स्वकीयोटजे । दुर्विनीतोऽयं दण्डनीय इति बुद्ध्या रोषारुणविस्फारितनेत्रेण तं दह्नन्निवाधोमुखचौरं शशाप यतस्त्वंविषयोपभोगलालसया कुकर्मेदं कर्तुं प्रवृत्तोऽसि ततस्ते शरीरे सहस्रभगचिह्नानि प्रादुर्भविष्यन्ति । शताश्वमेधयज्ञसम्पादनेन कश्चिदपि वलवान् वीरपुरुष इन्द्रो भवितुमर्हति । तस्यचैरावताख्य: शुक्लवर्णो गजेन्द्रो वाहनमस्ति । सदधीच्यास्थिनिर्मितं वज्रं धारयति । तेनैव वज्रेण "इन्द्रशत्रुर्विवर्धस्व मा चिरं जहि विद्विषम्" इति समुच्चारितमन्त्रे समासान्तोदात्तस्य स्थाने बहुव्रीहिलया पूर्वपदप्रकृतिस्वरस्योच्चारणे कृते मन्त्रोच्चारकै: दितिभावनाप्रतिकूलं वृत्रासुरं संग्रामे पञ्चत्वं प्रापयामासेन्द्र: । सच प्रायो महदीर्ष्यालुरूपेण पुराणेषु वर्णितो दृश्यते । यदा कोऽपि यज्ञपरम्परां सम्पादयेत्, घोरतपो वा कुर्यात्तदा स्वपदविनाशभिया विघ्नकरणे स्वयमेव स संलग्नो भवति । सगराख्यनृपतेर्यदा शताश्वमेधीययज्ञाश्वस्य मोचनमभवत्तदा सहस्राक्ष: तं हृत्वा पातालस्थितमुने: कपिलस्याश्रमे बबन्ध । फलत: तदन्वेषणबद्धपरिकराणामुर्वी-

विदारणतत्परसहस्रसंख्याकसगरपुत्राणां मुनेः क्रोधाग्नौ सहाहाकारं हवनमभवत्। दिलीपस्य चाश्वमेधयज्ञे स्वयमेवेन्द्रो यज्ञाश्वं जहार। यज्ञाश्वसंरक्षकेयुवराजपदभाजा रघुणा सार्धं तस्य तुमुलयुद्धं लोकप्रसिद्धमेव।

विश्वामित्रस्य घोरतपः श्रुत्वा स मेनकाख्यामप्सरसं तत्तपोविघाताय प्रेषयामास तत्फलस्वरूपा मेनकातः शकुन्तलाख्या बालिका समुत्पन्ना। यया सह कण्वाश्रमे दुष्यन्तस्य गान्धर्वविवाहोऽभवत्। भरताख्यपुत्रश्चोत्पन्नः। पौराणिकयुगे सुवृष्टिकामनया पर्जन्येशरूपेण तत्र भगवत इन्द्रस्य पूजनं प्रचलितमासीत्। इन्द्रयागकृतोद्यमान् नन्दपुरोगान् वृद्धगोपान् यदा सर्वात्मा भगवान् श्रीकृष्णोऽनभिज्ञ इव तदुत्सवविषयमवलम्ब्यापृच्छत्तदा तदुत्तरं वितरता नन्देनेदमेवोक्तं श्रीमद्भागवताख्यपुराणस्य दशमस्कन्धे यथा-

**पर्जन्यो भगवानिन्द्रो मेघास्तस्यात्ममूर्तयः।**
**तेऽभिवर्षन्ति भूतानां प्रीणनं जीवनं पयः॥**
**तं तात वयमन्ये च वार्मुचां पतिमीश्वरम्।**
**द्रव्यैस्तद्रेतसा सिद्धैर्यजन्ते क्रतुभिर्नराः।**

तपोबलशक्त्या दैत्यादयोऽपि लोकं विजित्येन्द्रपदमवापुः। बलिरपीन्द्रपदवीमवाप इति तु बहुश्रुतमेव। तन्निर्दलनायैव भगवान् विष्णुर्वामनरूपेणावततार भिक्षाव्याजेन च तस्य बन्धनं कृत्वा पाताले प्रेषयामास। देवान् विजित्य महिषासुरोऽपि प्राप्तवानिन्द्रपदम्। तदुक्तं देवीमाहात्म्ये—"इन्द्रोऽभून्महिषासुरः"। देवानां प्रार्थनया चण्डिकात्मिका भगवतः शक्तिस्तस्य वधमकरोत्।

इदानीमपि यज्ञेषु वैदिकदेवतारूपेण वैदिकैस्तस्य स्तवनं हवनादिकं च विधीयत एव। गर्गर्षिदृष्टमन्त्रस्येन्द्रस्तवने बहुलतयोपयोगो दृश्यते। रक्षणाय च तस्याह्वानं क्रियते, यथा—

त्रातारमिन्द्रमवितारमिन्द्रं,
हवे हवे सुहवे शूरमिन्द्रम् ।
ह्वयामि शक्रं पुरहूतमिन्द्रं,
स्वस्तिनो मघवा धात्विन्द्रः ।

एवं वेदेषु तस्य सर्वतोमुखी प्रतिभा वर्णिता दृश्यते । स शक्तेः प्रतीकोऽस्ति । वरुणमरुतादयः सर्वे देवास्तस्य सहायकाः सन्ति । वैदिकयुगादारभ्याद्यावधिशक्तिप्रदातृरूपेण स्तुतो राष्ट्रीयदेवः सर्वशक्तिमानिन्द्रः सर्वान् समृद्ध्या शक्त्या च युनक्तु ।

# पातञ्जलयोगदर्शनोक्ता विभूतयः पुराणानि च

डॉ० रामशङ्करभट्टाचार्यः

पुराणेषु अन्तराऽन्तरा विभूतिप्रसङ्गो दृश्यते। एषु प्रसङ्गेषु क्वचित् स्फुटरूपेण पातञ्जलदर्शनच्छायाऽवलोक्यते। अध्येतॄणामवलोकार्थं पातञ्जलदर्शनसदृशानि कानिचन पुराणस्थलानि विशेषतो विभूतिनिर्देशपराणीह संगृह्यन्ते।

इदं विज्ञेयं यत् सिद्धेशनामसु पतञ्जलेर्नाम भागवते स्मृतम् **'आसुरिः स पतञ्जलिरिति'** (६।१७।१४)। स्कन्दपुराणीये सेतुमाहात्म्ये योगदर्शनमपि स्मृतम् (३३।८)। विष्णुधर्मोत्तरे योगदर्शनस्य स्वरूपमपि दर्शितम्— **'पातञ्जलम् अनन्तश्च'** इति (३।७३।४८)। मतमिदं श्रीतत्त्वनिधावपि विशदं दर्शितम्—

**पतञ्जलाभिधं रक्तं सर्पवक्त्रं सुतेजसम्।**
**अक्षसूत्रं पताकां च दधतं कुण्डलान्वितम् ॥इति॥**

सौरपुराणे पुनः पातञ्जलं योगशास्त्रं शैवमिति प्रोक्तम्पातञ्जलं योगशास्त्रं शैवं वच्छास्त्रमिष्यते। वेदान्तशास्त्रमूर्धन्यमद्वैतं यच्चबोधयेत् इति (४०।५५)।

इतिहासे पुराणे च क्वचित् पातञ्जलीयं मतमपि अनुकृतम् । तथाहि—उक्तं खलु पतञ्जलिना **वितर्क-विचारानन्दास्मिता-रूपानुगमात् संप्रज्ञात इति** (१।१७) । अध्यात्मध्यानयोगप्रसंगे शान्तिपर्वणि श्लोकोऽयं पठ्यते—

**वितर्कश्च विचारश्च विवेकश्चोपजायते ।**
**मुने समादधानस्य प्रथमं ध्यानमादितः इति । (१९५।१५)।**

अपरमुदाहरणम् पतञ्जलिना ईश्वरलक्षणमुक्तम्—**क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वर इति** (१।२४) । कुमारिकाखण्डे मतमिदमित्थं दर्शितम्—

**क्लेशकर्मविपाकाद्यैराशयैश्चाप्यसंयुतम् ।**
**ईशानमाराध्य इति ( १२।५२ ) ।**

उदाहरणान्तरमपि । योगश्चित्तवृत्तिनिरोध इति पतञ्जलिः । आह लिङ्गपुराणम्—**योगो निरोधो वृत्तेस्तु चित्तस्येति** (१।८।७) । योगवाशिष्ठेऽपि पातञ्जलीयपारिभाषिकशब्दाः बहुत्र व्यवहृताः । योगसूत्रीयविकल्पशब्द उत्पत्तिप्रकरणे प्रयुक्तः (१०१।३३) इति टीकाकार आनन्दबोधेन्द्रो दर्शितवान् ।

दृश्यतामपरमुदाहरणम् । योगसूत्रे यद् ईश्वरप्रकरणं वर्तते, तत् सभाष्यं लिङ्गपुराणे ( २ । ९ अ० ), शिवपुराणीयवायवीयसंहितायां (६।१—५) च शब्दतोऽनुकृतम् । योगसूत्रभाष्यमेवात्र उपजीव्यभूतमिति आस्माकीना दृष्टिः ।

पुराणे संयमसम्बद्धानि धारणाध्यानसमाधिलक्षणानि प्रोक्तानि, तानि च योगसूत्रोक्तलक्षणैः सह बहुलं संवदन्ति । तथाहि—**देशबन्धश्चित्तस्य धारणा, तत्र प्रत्ययैकतानता ध्यानम्, तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिरिति**, त्रीणि सूत्राणि (३।१ ३) । पुराणेषु पुनः **देशेषु धारणा चित्तबन्धनम्** (मार्कण्डेय०), **तत्रैकचित्तता ध्यानं प्रत्ययान्तरवर्जितम्** (लिङ्ग० १।८।४३); **यदर्थमात्रनिर्भासं स्तिमितोदधिवत् स्थितम् । स्वरूपशून्यवद्भानं समाधिरभिधीयते** (शिव० ७।२।३७।६२) इत्येतादृशानि वचांस्यवलोक्यन्ते ।

अथात्र वयं विभूतिपादीय—विवरणेन सह पुराणश्लोकानां सादृश्यं प्रदर्शयामः। इदं सादृश्यप्रकरणमपूर्णम्; यदि सूक्ष्मेक्षिकया पुराणानि दृष्टानि स्युस्तर्हि बहूनि ईदृशानि स्थलानि वाचकाना दृष्टिपथे पतिष्यन्तीति निश्चितमेव—

| योगसूत्राणि | पुराणवचनानि |
|---|---|
| तज्जयात् प्रज्ञालोकः ३।६ | समाधिना च सर्वत्र प्रज्ञालोकः प्रवर्तते (शिव ७।२।३७।६१) |
| ततः प्रातिभश्रावणवेदना स्वादवार्ता जायन्ते ३।३६ | प्रतिभाश्रावणीवार्ता दर्शना: स्वादवेदनाः उपसर्गा भवन्त्येते (सौर० १३।५) |
| समानजयाज्ज्वलनम् ३।३९ | नाभौ प्रपूरयेद् वायुं शरीरं व्याप्य धारयेत्। समानं जयते तज्जः प्रज्वलन् यदि पश्यति (कालिकापुराणम् योगचिन्तामणिधृतम् पृ० १९५)। |
| जन्मौषधिमन्त्रतपःसमाधिजाः सिद्धयः ४।१ | जन्मौषधितपोमन्त्रैर्यावतीरिह सिद्धयः। योगेनाप्नोति ताः सर्वाः नान्यैर्योगगतिं व्रजेत् (भाग० ११।१५।३४) जन्मौषधितपोमन्त्रयोगसिद्धैर्नरेतरैः इति च (भाग० ४।६।९)। |

क्वचिच्च योगसूत्रं साभाष्यं पुराणेऽनुकृतं दृश्यते। तस्य भूमिषु विनियोग इत्यत्रोक्तम्—तस्य संयमस्य जितभूमेर्याऽनन्तरा भूमिस्तत्र विनियोगः। न ह्यजिताधरभूमिरनन्तरभूमिं विलङ्घ्य प्रान्तभूमिषु संयमं लभते इति (३।६)। वायुपुराणे खलूक्तम् –

**जित्वा जित्वा सदा भूमिमारोहेत्तु सदा मुनिः।**
**अजिता हि महाभूमिर्दोषानुत्पादयेद् बहून् ॥इति (११।२५)**

क्वचिच्च सूत्रं पुराणश्लोके स्फुटतया विवृतम्। तथाहि—स्थान्युपनिमन्त्रणे सङ्गस्मयाकरणं पुनरनिष्टप्रसंगात् इति पतञ्जलिः (३।५१)। कुमारिकाखण्डे पुनर्दृश्यते—

**जीवतो देहभेदे वा सिद्धयश्चैतास्तु योगिनाम्।**
**संगो नैव विधातव्यो भयात् पतनसम्भवात् ॥ (५५।११५)।**

विभूतिपादगताः केचन विशिष्टाः शब्दाः नामतो निर्दिष्टाः पुराणेषु। यथा वज्रसंहननबलेति शब्दः भागवते (५।१७।१९) प्रयुक्तः। रूपलावण्यबलवज्रसंहननत्वानि कायसंपदिति खलु योगसूत्रम् (३।४६)।

ते समाधावुपसर्गाः व्युत्थाने सिद्धयः (३।३७) इतियोगसूत्रम्। अस्मिन्नर्थे पुराणगतयोगप्रकरणेषु उपसर्गपदं प्रायेण प्रयुक्तम्, यथा—

उपसर्गाः प्रवर्तन्ते दृष्टे ह्यात्मनि योगिनः (मार्कण्डेय पुराणम्), 'एवमारूढयोगस्य तस्यापि कुरुनन्दन! पञ्चोपसर्गाः कटुकाः प्रवर्तन्ते, यथा शृणु' (कुमारिकाखण्डम् ५५।६१) इति च।

विवेकज्ञानं योगसूत्रे विवृतम् (३।५४)। तदिदं ज्ञानं पुराणेषु दृश्यते—प्रागुक्तं विवेकोत्थं द्विधाज्ञानं प्रवर्तते। यथा सूर्यस्तथाज्ञानं तद् विप्रर्षे विवेकजम् इति ॥ (विष्णु० ६।५।६२)।

यमादिप्रभवसिद्धयोऽपि द्वितीये पादेऽभिहिताः। एतत्सिद्धिपराणां सूत्राणामनुकरणमपि पुराणेषु दृश्यत एव। तथापि प्रत्याहारफलविषये पतञ्जलिराह, परमावश्यतेन्द्रियाणाम् इति (२।५५)। आह च विष्णुपुराणम्—वश्यता परमा तेन जायते इति (६।७।४४) इति।

एवमन्यान्यपि स्थलानि सन्तीति निवेद्य विरम्यते।

## मर्मस्पर्शिव्यङ्ग्यकारो महाकविरकबरः

विद्याभूषणः
श्री गणेशरामशर्मा

[ गताङ्कादग्रे ]

### कवेरस्य प्रत्युत्पन्नमतित्वम्

कदाचिन्महाकविरसावकबरः कस्यांचित् सङ्गीतसभायां सम्मिलितो बभूव। तत्र तत्कालीना गौहरनाम्नी सुन्दरी वेश्या सङ्गीतं जगौ ननर्त च। सर्वेऽपि तत्रोपस्थिताः सदस्याः स्वयं कविरकबरश्चापि गुणग्राहकत्वात् प्रसेदुर्मुमुदिरे च। सर्वेऽपि तत्र विद्यमानाः सदस्यास्तस्यै नर्तक्यै किमपि किमपि धनवस्त्रमिष्टान्नादिकं पारितोषिकं प्रयच्छन्तोऽभूवन्। शिष्टाचारानुरोधात् समयानुवर्तनाग्रहाच्चाकबरोऽपि च तस्यै गौहरनर्तक्यै किमपि दानं स्वकर्तव्यं मेने। परन्तु सा पारितोषिकरूपं तस्मात् किमपि तद्रचितं काव्यमेव साग्रहं ययाचे। अथ प्रत्युत्पन्नमतिः प्रतिभावानसौ कविस्तत्कालमेतत् पद्यं विरच्य तस्यै प्रददौ—

**"खुशनसीब कौन है इस बज्म में गौहर के सिवा।**
**अल्लाह ने सब कुछ दे रक्खा है एक शौहर के सिवा॥"**

तदिदं काव्यं निशम्य स्वयं सा गौहरनर्तकी सभासदश्च सर्वेऽतितरां मुमुदिरे तथा कवेरस्य प्रत्युत्पन्नमतित्वं प्रस्फुरन्तीं तस्य काव्यप्रतिभां च प्रशशंसुः।

अथ प्रथमविश्वयुद्धादनन्तरमत्र देशे रक्तज्वरस्य (इन्फ्लूएञ्ज़ा) दुष्प्रभावो महामारीरूपेण प्रससार। तद्विषये कविर्वदति—

"इनफ्लूएञ्ज़ा चढ़ा चौगान बाज़ी अब कहाँ ?
चारे की क़िल्लत हुई तो बैल भी मरने लगे।
हम में टेढ़ापन जो आ जाये तो वो सीधा करे;
देवता बिगड़े तो फिर सरकार इसको क्या करे?"

भारतवर्षेऽत्र कवेरस्याकबरस्य जीवनकाले बतानावृष्टिर्बभूव। विषयमिममधिकृत्य कविनोक्तम्—

"इक मुसीबत में है साधू या कोई सेठ है।
है तो ये सावन मगर हुक्मे-खुदा से जेठ है॥
सच तो है गरदूँ को राहे-मेहरबानी क्यों मिले ?
आग जब यूरप में बरसे हमको पानी क्यों मिले ?"

अकबरस्य जीवनकाले भूम्यधिग्रहणनियमः निर्मितोऽभूत्। तद्विषये कविरसौ ब्रवीति—

"तङ्ग दुनियाँ से दिल इस दौरे-फ़लक में आ गया।
जिस जगह मैंने बनाया घर सड़क में आ गया॥"

अयं हि कविरकबरो नवीनं स्वगृहं निर्मातुमियेष, परन्तु नगरपालिकायाः कर्मचारिणो गृहनिर्माणायानुमतिप्रदाने विलम्बमकुर्वन्। विषयेऽत्र कविः कथयति—

"करो न तामीर घर की 'अकबर'
हदूदे-म्युनिसीपिल के अन्दर।
ये अहल्काराने-बदबियानत,
बनेंगे फोड़ा बगल के अन्दर॥"

तदानीम् एनी बेसेण्टमहाशयाया महानुत्कर्षोऽभूत् । तस्याः प्रतिष्ठा-मसहमाना अपि केचन जना आसन् । तमेतं विषयमधिकृत्य महाकविरकबरो वदति—

**"अब मिसेज़ बेसेण्ट नज़मों की कहानी बन गई ।**
**राज हम पाएँ, न पाएँ वह तो रानी बन गई ॥"**

अकबरस्य जीवनकाल एव गान्धेर्महात्मनो विख्यातं सत्याग्रहान्दोलनं सक्रियमारेभे । केचन मोहम्मदीयाश्चापि गान्धेः सहयोगिनोऽभूवन् । एवं विधेषु मौलानाशौकतअलीमोहम्मदअली-जिन्नाप्रभृतयो मुख्या आसन् । इतिहासेन प्रमाणितम् यदिमे नेतारोऽन्ततो भारतस्यैक्यं विचिच्छिदुर्देशस्यास्य विभाजनं चक्रुः । क्रान्तदर्शी कविवरोऽसौ तदानीमेवाकथयत्—

**"बुद्धू मिया भी हज़रते-गान्धी के साथ हैं ।**
**गो गर्दे-राह पर आँधी के साथ हैं ॥"**

अथेदानीं पदप्रतिष्ठाप्राप्तये नितान्तं सस्पृहाणां भोगैकपरायणानां नेतॄणां विषये कविरसावकबरो वदति -

**बला से कोई कहे कुछ ये अफसरी मिल जाय ।**
**वो चाहते हैं हमको मिनिस्टरी मिल जाय ॥"**

अधुना मन्त्रित्वोपलब्धये येऽहमहमिकया नेतारः सतृष्णं दुश्चेष्टमाना दरीदृश्यन्ते तेषां मनोवृत्तिं तामिमां कविरसौ क्रान्तदर्शितया कीदृक् साक्षेपं सटीकं च वर्णयामासेति कौशलमस्य प्रत्यक्षमेवास्माकम् !

स खलु पुनरपि नव्यान्नेतॄन् प्रति वदति—

**"नये तरीके के लीडर हैं इस ज़माने में ।**
**कि सहव रहते हैं पार्टी बनाने में ॥"**

पुनश्च—

"अमल करें, न करें, किस्सरा-अमल तो है!
कि लीडरों से जहाँ में चहल-पहल तो है! !"

अपरं च—

"जिस कदर चन्दा मिला चुपचाप घर में रख लिया।
लीडरी में जब बहुत कुछ नाम पैदा कर लिया॥"

अन्यच्चाप्यवलोक्यताम्—

"बैठे हैं एक कोने में चुपचाप जेल काट के।
धोबी के जैसे कुत्ते न घर के न घाट के॥"

अधुना देशेऽत्र नेतॄणां विश्वासं प्रजा जना नैव कुर्वन्ति, न च तेषां नीतिं चानुसरन्ति। तद्विषये कविर्वक्ति—

"ले रही है मुफ़लिसी इस की खबर,
है बहुत हैरान लीडर क्या करे?
गाड़ियाँ जब इसके क़ाबू की नहीं,
आप ही बतलाएँ, इञ्जन क्या करे??"

**अकबरस्य महाकवेर्वाग्विनोदाः**

महाकविरसावकबरमहाशयो वाग्विनोदेऽतीवनिपुणो बभूव। तस्य काश्चन हासपरिहासपूर्णाः सूक्तयोऽपि दृश्यन्ताम्—

"रक़ीबों ने रपट जा-जा के लिखवाई ये थाने में;
कि 'अकबर' नाम लेता है खुदा का इस जमाने में!"

पुनश्च—

"मेरे मनसूबे तरक्की के हुए सब पायमाल,
बीज मगरिब ने जो बोया, वह उगा और फल गया।

**बूट डासन ने बनाया, मैंने एक मज़मूँ लिखा;**
**मुल्क में मज़मूँ न फैला और जूता चल गया ।।"**

अत्र 'जूता चल गया !' इत्यसौ वाग्धारायाः प्रयोगः कियद्गम्भीर-मुपहासं करोति तत् सहृदयैकसंवेद्यमास्ते । अथान्यच्चाप्यवलोक्यताम्—

**"एक पीर ने तह्ज़ीब से लड़के को उभारा;**
**एक पीरने तालीम से लड़की को सँवारा ।**
**पतलून में वह तन गया, यह साये में फैली;**
**पाजामा, गरज़ यह है कि दोनों ने उतारा ।।"**

अपरश्च—

**"गाँधिए-उल्फ़त हूँ सुन लीजे मेरा हाल एक दिन ।**
**करूँगा वरना मेरी जाँ ! भूख हड़ताल एक दिन ।।"**

अपरं च—

**"हम समझते हैं कि ये इश्के-बुतां एक रोग है;**
**लेकिन इसको क्या करें मिलता जो मोहन भोग है ।**
**शाहीदाने-मग़रबी करते नहीं मुझको कबूल;**
**टाल देते हैं ये कहकर आप काला लोग है !"**
**"हो खैर या रब ! अकबरे-आशुफ्ताहाल की;**
**सरजन रक़ीब और दवा अस्पताल की ! !"**

जानन्त्येव पाठका यद्धि चार्ल्सडारविन इति विख्यातः पाश्चात्त्यो मनीषी विकाशवादसिद्धान्तस्य प्रतिष्ठापको बभूवेति । तत्सिद्धान्ता-नुसारं प्राणिसृष्टेर्विकाशक्रमे मानवो वानरादेव विकाशमानः क्रमेण नरत्वमापेतिसर्वजनविहितम् । तमिमं सिद्धान्तं खण्डयन् कविरकबरो ब्रूते—

"डारविन साहब हक़ीक़त से निहायत दूर थे ।
मैं न मानूँगा कि मूरिस आपके लङ्गूर थे ।।"

अद्यत्वे भ्रष्टाचारा वणिजो लोकानां धनापहरणे यथा लोभोपहत-चेतसो यद्वा तद्वा दुश्चेष्टन्ते तान् प्रति कविराह—

"सेठ जी थे फ़िक्र में एक एक के दस दस कीजिए ।
मौत आ पहुँची कि हज़रत! जान वापस कीजिए !

अथेदानीं ये जना नगरपालिकादीनां सदस्या, डाक्तरा, आरक्षि-विभागे राजकीया भृत्याश्च भूत्वा यथा प्रजाजनानां धनानि प्राणाँश्चा-पहरन्ति, तद्विषये कवि. प्राह—

"क्यों सिविल सर्जन का आना रोकता है हमनशीं ?
इसमें है एक बात ऑनर की शफ़ा हो या न हो ।
मेम्बरी से आप पर तो वार्निश हो जायगी;
कौम की हालत में कुछ इससे जिला हो या न हो ।
मौलवी साहब न छोड़ेंगे खुदा गो बख्श दे;
घेर ही लेंगे पुलिस वाले सज़ा हो या न हो ।।"

अधुनात्र देशे शिक्षाव्यपदेशाद्धनस्यापव्ययो जायमानोऽस्ति, दारपरि-ग्रहवतां पुरुषाणां संसारप्रपञ्चान्निवृत्तिश्च दुष्करा भवति, विषयेऽत्रा-कबरो ब्रवीति -

"चिपकूँ दुनिया से किस तरह मैं,
औरत ने कहा कि गोंद मैं हूँ ।
कौमी चन्दे किधर समायें,
कॉलिज ने कहा कि तोंद मैं हूँ ।।"

स्वराज्यात् पूर्वं ये भूस्वामिनो मिथ्याचारैः स्वाश्रितान् पीडयन्ति स्म, परन्तु स्वयमपि च ते स्वदुष्कर्मभिः पीड्यन्ते स्म नूनम्। तमिमं विषयमधिकृत्य कविरकबरो वक्ति—

"मुहताजे-दरो-वकीलों-मुख़्तार हैं आप;
सारे अमलों के नाज़-बरदार हैं आप।
आवारा वो मुन्तशिर हैं मानिन्दे-गुबार
मालूम हुआ मुझे ज़मींदार हैं आप॥"

महाकविरसावकबरोऽतीवस्वाभिमानी स्वात्मगौरववांश्च बभूवेति प्रागुक्तम्। परमयं चाटुकाराणां भर्त्सनामपि स्वकाव्ये तथा चक्रे यथा न कोऽप्यन्यः सहसा विदधीत। विषयेऽस्मिन् काश्चन सूक्तयोऽपि दृश्यन्ताम्—

"मेरी नाकामयाबी की कोई हद हो नहीं सकती।
सदाक़त चल नहीं सकती, खुशामद हो नहीं सकती॥"

अपरं च—

"दिली ख्वाहिश तो है बेशक एक और एक दो कहिए।
मगर कहने को हूँ मौजूद सब कुछ आप जो कहिए॥"

अन्यदपि—

'खुदा जाने वो क्या समझे कि बिगड़े इस क़दर मुझ पर;
कहा था मैंने इतना ही मुझे कुछ अर्ज करना है।"

पुनरपि च—

"कोई जापान कोई रूस के साथ।
मैं आपके जुलूस के साथ॥"

अन्यच्च—

"इस अखाड़े में अडङ्गे देख कर क़ानून के ।
शेख़ ने तहमत से हिजरत की तरफ़ पतलून के ।।"

अथान्यच्चापि --

"कोठी में जमा है न डिपॉज़िट है बैङ्कस् में ।
कल्लाश कर दिया है दो-चार थैंकस् में ।।"

इत्थमकबरस्य काव्यरचनासु सर्वतो दृक्पातेन सुस्पष्टं ज्ञायते यदयं स्वसमये महाकविरेवासीत् । परिमितशब्दैः सरलातिसरलैर्वाक्यैः कविरसौ मार्मिकेण प्रकारेण हासपरिहासभङ्ग्या सव्यङ्ग्यं च वर्ण्यविषयं तथा वर्णयामास यथा तत्काव्यश्रवणसमकालमेव हि रचनासौन्दर्यं प्रत्यक्षं भवति पाठकानाम् तथा तच्चेतश्चमत्कारचञ्चलं च भवति । अकबरस्य सूक्तयः सर्वसाधारणादारभ्य विशेषज्ञविद्वज्जनपर्यन्तं कण्ठस्था विश्रूयन्ते । अनेके जना वार्ताविनोदप्रसङ्गेष्वपि महाकवेरस्य सूक्तीर्भाषणव्याख्यानादिप्रकरणेषु चापि मध्ये-मध्ये व्यवहरन्तः स्ववक्तव्यं प्रभावजुष्टं चातुर्यपूर्णं च साधयन्ति । एवंविधस्यासाधारणशेमुषीजुषो महाकवेर्विषयेऽद्य स्वलेखनीं व्यापार्य वयमानन्दमनुभवामः । पाठकमहाभागेभ्योऽपि च तदिदं रुचिकरं स्यादित्याशासाना वयमत्र विस्तारभयाद्विरमामः ।

एकाङ्की

# ऐतिहासिकी परम्परा

श्री भगवानदास सफड़िया:

[ इतिहासकृतोऽध्ययनकक्षं मञ्चस्यैकतो भवेत् येन पश्चात् स्थितमावरणं समुत्थाप्यन्तःस्थितं दृश्यं प्रदर्शयितुं शक्येत् । तस्य मुखं दर्शकान् प्रति न स्यादपितु मञ्चस्य वामतः स्यात् । इतिहासकृतो ऽभिनयं पात्रद्वयेन भविष्यति । यदा स आसन्दिकायां शयालुः भविष्यति तदा छायामूर्तिरभिनयं करिष्यति । यदा स जागरिष्यति तदा छायामूर्तिर्लुप्ता भविष्यति कक्षे स्वल्पः प्रकाशः स्यात् ।

इतिहासकृतोऽध्ययनकक्षम् । काष्ठफलकाश्रयेणासन्दिकासीनो दीपप्रकाशे किमपि लिखति । काष्ठफलके आधारदीपस्तथा कतिपयेतिहाससन्दर्भग्रन्थाः सन्ति, रिम-कल्पा फुलस्केपपत्राणि लिखितानि, तमालवर्तिका-सिगरेट-अग्निपेटिका तथा एका लघ्वी वाद्यसमन्वितघंटिका सन्ति । ]

**इतिहासकारः**—कतिचित् कालपर्यन्तं लिखित्वा अंगुलीरायच्छमानोऽन्ततः समाप्तम् । इतिहासग्रन्थं त्रिंशद्वर्षाणामनवरतश्रमं कं श्रावयामि अस्मिन् अर्धरात्रौ । शीलां जागरयामि । शीला कियतीमिव प्रसन्नतामनुभविष्यति । [आह्वयति] शीले...अयि शीले !

**शीला**—[चक्षुषी उन्मीलयन्ती पुरतः प्रविश्य] इदानीं किमस्ति । निद्रामपि निषेधसि ।

**इतिहासकारः**—इदं पुस्तकं भारतीयानामार्याणामितिहासनामकं यदहं त्रिंशद्वर्षेभ्यो लिखितुं प्रवृत्त आसमद्य पूर्णतां गतम् ।

**शीला**—किमिदमेव विज्ञापयितुं मां प्रबोधितवानसि ? प्रातरेव सूचयितुं शक्यमासीत् ।

**इतिहासकारः**—शीले अद्याहं नितरां प्रसन्नोऽस्मि । भावोद्रेकवशंगतः स्वं निरोद्धुं नापारयम् । तथा च त्वां समाचारममुं ज्ञापयितुं प्रबोधितवानस्मि । [**लिखितपृष्ठानि संकेतीकृत्य**] अयं मम त्रिंशद्वर्षीयपरिश्रम-परिणामः ।

**शीला**—एषु त्रिंशद्वर्षेषु त्वयाहमपि पर्याप्तं क्लेशिता, न समये भोजनं न च शयनम् । यदि च तव पितृभ्यां वस्त्रान्नचिन्ताराहित्यं तव न कृतं भवेत् तर्हि न जाने मम का दशा भूता भवेदिति ।

**इतिहासकारः**—पश्य शीले ! मम पितृचरणैः स्वजीवन-पर्यन्त-रिक्थं सम्पत्तिरूपेण मत्कृते विसर्जितम् । अहं पुनः जीवनपर्यन्तं रिक्थरूपेण पुस्तकमिदं विजयाय विसर्जयिष्यामि येन आर्थिकलाभादतिरिक्तं सम्मानप्राप्तिरपि भविष्यति ।

**शीला**—वरम्, इदानीं तु निद्रां भज । न जाने, कियतीः रात्रीरेवमेव त्वं व्यत्यापितावानसि ।

**इतिहासकारः**—शीले, किमुन्मादग्रस्तासि । अद्यतना रात्रिः किं शयनस्य वर्तते । पश्येदानीं बहु कर्तव्यमवशिष्यते । एषा पृष्ठानां व्यवस्थितिः । सन्दर्भग्रन्थसूची-निर्माणम् । कुतो मह्यमिदानीमपि निद्रा-लाभ-सम्भावना । गच्छ त्वं, शेष्व ।

**शीला**—त्वं यथेच्छमाचर, अहं तु गच्छामि [**प्रस्थानम्**] ।

**इतिहासकारः** [**स्वगतम्**] श्वो यदा देशो ज्ञास्यति यन्मया कियता परि-श्रमेण देशस्य व्यवस्थित इतिहासो लिखितः तदा... वरं भविष्यति यदस्य भूमिका राष्ट्रपतिद्वारा लिखिता भवेत्, अथवा अलं भूमिकया स्वयं ग्रन्थ एव भूमिकास्थानीय । ग्रन्थमिमं राष्ट्रपतये समर्पयामि...अलि-खितं पत्रकमादाय तत्र किमपि लिखति...कीदृशं स्यात् यदि त इमं पठेयुः येषामत्र विवरणं वर्तते । [ **कतिपयपत्राणि समुत्थापयति । जृम्भा सहा-**

गच्छति। करस्थितपृष्ठानि लिखितपत्राणां राशौ निधाय विचारमग्नो भवति। क्षणेनैव आधारदीपं निर्वापयति काष्ठफलके मस्तकं निधाय स्वपिति। तस्य मुखं दर्शकान् प्रति वर्तते। चर्ममयमर्धोरुकं वसानः पुरुहूतः प्रविशति। पुरुहूतस्य दक्षिणहस्ते ताम्रवज्रं वामहस्ते वर्तुलपाषाणत्रिकं वर्तते, तस्य स्कन्धे उपवीतीकृतं सूत्रं विद्यते। इतिहासकारस्य स्थूलशरीरं निद्रालीनं वर्तते किन्तु छायामूर्तिरुत्तिष्ठति।]

इतिहासकारः - अये ? कोऽयं यो मदीयाध्ययनकक्षे प्रविशन्नागच्छति?

पुरुहूतः—विस्मृतवानसि इतिहासकार ! अहं तव पूर्वजः पुरुहूतो ऽस्मि। आर्याणा प्रथम इन्द्रः, मम नेतृत्व एव आर्यैः भारतभूमौ पदार्पणं कृतम्। मयैव तु देवासुरसंग्रामे आर्याणां सेनापतित्वं कृतम्।

इतिहासकार.—क्षम्यतां देव ! अहं भवन्तं न परिचितवान्। किन्तु भवतामुल्लेखो मया [संकेतीकृत्य] अस्मिन्ग्रन्थे कृतः।

पुरुहूतः कृतज्ञोऽस्मि। यदहं तव पुस्तके स्थानं प्राप्तवान्। किन्तु किं तवोल्लेखो यथार्थोऽस्ति ?

इतिहासकारः तथ्यमतथ्यं वेति तु नाहंजानामि किन्तु मम निष्कर्षाः सुदृढतर्कानाधारीकुर्वन्ति किन्तु यदि मदीयकतिपयप्रश्नानामुत्तरदानकृपां भवन्तः कुर्वन्तु तर्हि मम सौविध्यं भविष्यति।

पुरुहूतः— अतएवाहमागतोऽस्मि, पृच्छ।

इतिहासकारः—भगवन् ! कियान् कालोऽतीतो यदा भवानत्र जगत्यामासीत्।

पुरुहूतः मदीयकालगणना वर्षाणां मानेन तथैव वर्तते यथा सूर्यस्य दूरत्वे मीलैर्मापनम्, न जाने कति मन्वन्तराणि युगानि च मे व्यतीतानि।

इतिहासकारः—कतिपयविदुषां मान्यता वर्तते यदत्र देशे आर्या अन्येभ्यो देशेभ्यो नैव समायाताः। ते अत्रैव न्यवसन्।

**पुरुहूतः**—मान्यतेयमसुराणां वंशसमुद्भवानां भविष्यति। यदि चार्या अत्रैव न्यवसन् तर्हि देवासुरसंग्रामः कथमभविष्यत्।

**इतिहासकारः**—[ **वर्तुलपाषाणं प्रति संकेतं कुर्वन्** ] इदं भवान् शङ्करस्य भगवतो मूर्ति कथं गृह्णन्ति।

**पुरुहूतः**—एतानि मदीययुगस्यास्त्रशस्त्राणि सन्ति। इमानि प्रस्तराणि वन्यपशूनामपसारणाय प्रयुज्यन्तेस्म [**दर्शयित्वा**] इदं ताम्रवज्रमसुराणां संहाराय।

**इतिहासकारः**—सम्भाव्यते यत् कालान्तरे अनयैव प्राचीनया अस्त्रपूजया शिवपूजास्त्ररूपं प्राप्तं स्यात्। यथाऽस्मिन् अणुयुगे कृपाणपूजा शक्तिरूपेण विधीयते। इदं बोधयन्तु श्रीमन्तः यत् धर्मग्रन्थेषु भवतः चित्रणं पदलोलुपरूपेण कृतं वर्तते।

**पुरुहूतः**—तवायं प्रश्नो मधुरो नास्ति। हे वत्स! मया यदापि विहितं आर्यजातेरुन्नतय एव कृतम्। [**क्षणं मौनं स्थित्वा**] इदानीमहं गच्छामि।

[एकतः पुरुहूतः गच्छति अपरतश्च पीताम्बरमुत्तरीयं च वसाना रामः प्रविशति रामस्य वामस्कन्धे धनु:, दक्षिण हस्ते बाणमस्ति]

**इतिहासकारः**—[**परिवृत्य**] इदानीं क आयातः। [**रामं प्रति**] **महोदय** को भवान्?

**रामः**—रामोऽहमस्मि। अयोध्याया रामः। अस्मिन्भारतवर्षे सर्वप्रथम् अश्वमेधविधानश्रेयो मां प्राप्नोति।

**इतिहासकारः**—दर्शनेनाप्यायितोऽस्मि भगवन्? भवतः कालस्य तु मया विशिष्टोल्लेखः कृतः [**संकेतयित्वा**] अस्मिन् पुस्तके।

**रामः**—मम कालस्योल्लेखः? अस्मिन् पुस्तके? किमिदं पुस्तकम्?

**इतिहासकारः**—इदमस्ति भारतीयार्याणामितिहासोःममत्रिंशद्वर्षपरिश्रमाणां फलमिदं वर्तते।

**रामः**—त्रिंशद्भिः वर्षैरार्याणामितिहासः ? आश्चर्यम् ।

**इतिहासकारः**—किमाश्चर्यं भगवन् ?

**रामः**—इयानेव आर्याणामितिहासः,आश्चर्यमेवेदं न स्यात्तर्हि किम् ? भारतीयानामार्याणामितिहासस्तु इयान् प्राचीनोऽस्ति यदि प्रत्येक-शतवर्षाणां कृते केवलमेकामेव पंक्तिं लिखेत्तर्हि तस्य लेखनाय न्यूना-न्यूनं शतत्रयं वर्षाणामपेक्षते ततश्च कस्ते पठिष्यति ?

**इतिहासकारः**—भूतकालस्य कतिपय-प्रमुखघटनानां श्रृंखलाबद्ध-मालेखनमेव इतिहासं कथ्यते भगवन् ?

**रामः**—मम युगस्य सर्वातिशायीतिहासो महर्षिणा वाल्मीकिना लिखितः, अपि त्वया स पठितः ?

**इतिहासकारः**—आम् भगवन् ? स्व-पुस्तकस्य सर्वाण्यप्युद्धरणानि मया वाल्मीकिरामायणस्यांग्लानुवादस्य भूमिकात् एव गृहीतानि; कतिपयशङ्कानां निराकरणस्यानुकम्पां कुर्वन्तु, पुस्तकं अधिकतया शुद्धं भविष्यति ।

**रामः**—पृच्छ वत्स ?

**इतिहासकारः**—आर्याणां सेनापतिस्तु इन्द्रो भवति स्म । इयं प्रणाली कथं परिवर्तिता ?

**रामः**—देवासुरसंग्रामे आर्यैः इन्द्राय बहवोऽधिकाराः प्रदत्ता । यदा युद्धानां न्यूनता जाता नागरिकशक्ति-अभ्युदयो जातस्तदा एकं गणराज्यं निर्मितम् । यश्च राष्ट्राध्यक्षाय प्रजापति-उपाधिः प्रदत्ता । कालान्तरे मतानां बलेन निर्वाचिताः शासकाः स्वार्थ-परायणाः अयोग्याश्च सिद्धाः, अन्तिमप्रजापतिदक्षस्य वधः तस्य समयस्य क्रान्तिकारिनायकेन शङ्करेण कृतः । तदनुराज्यानामाधारभूमिरारब्धा । येषु राज्ञो ज्येष्ठपुत्र एव राज्याधिकारी भवति स्म । लघुलघूनां राज्यानामेकीकरणं विधा-यास्य देशस्य सार्वभौमराष्ट्ररूपता सर्वप्रथमं मया दत्ता ।

**इतिहासकारः**—भगवन् ! भवान् महानस्ति ।

रामः —[विद्रूपेण] अहं महानस्मि । [हास्यं कृत्वा] हः हः हः हः अहं महानस्मि ? त्वं जानासि इतिहासकार ! यदस्या महत्तायाः कृते मया किं न कृतम्, मदीय-कौटुम्बिक-जीवनं नरकायितमासीत् ।

इतिहासकारः—मानवः संघर्षैरेव महान् भवति ।

रामः त्वं पर्याप्तं सुन्दरतमशब्दैः कथयेः इतिहासकार ! किन्तु इयमेव महत्ता मम जीवनस्याभिशापरूपत्वं प्राप्ता । एतस्या एव महत्ताया कृते मया स्वपतिव्रतायै पत्न्यै वनवासाज्ञा प्रत्ता ।

इतिहासकारः—भगवन् ! सीतायै भवान् केवलं रजककथनेनैव वनवासं दत्तवान् किम् ? भवतामपि हृदये तां प्रति सन्देहो नासीत् किम् ?

रामः -इदानीं त्वं निरर्थकवार्तां करोसि इतिहासकार ! अहं गच्छामि । [ रामस्य शीघ्रतया प्रस्थानम् । रामस्य पश्चात् इतिहासकारस्य छायामूर्तिरपि लुप्यते, शयान इतिहासकारः चमत्कृत्य जागर्ति ।]

इतिहासकारः—[चमत्कृत्य] शृण्वन्तु भवन्तः [कमप्यदृष्ट्वा आम्-तर्हीदं सर्वमपि स्वप्नमासीत् [व्यंग्येन] इदानीं प्रभृत्येव भगवान् रामो रुष्टतां प्राप्तः । यदा मम पुस्तकं प्रकाशितं भविष्यति तदा किं भविष्यति ? [ ताम्रकूटवर्तिदीपशलाकया योजयित्वा दृक्चतुःसमाकर्षति मुखवायुः पुनः जृम्भते । ]

[ एतस्मिन्समये दक्षिणहस्ते शिरो निधाय स्वपिति । येन मुखं मञ्चं प्रति भवति, अङ्गुलीषु धूम्रवर्तिका वर्तते हस्तप्रसारणात्पाण्डुलिपिं यावत् प्राप्नोति पश्चात्वर्ती पटऽपसरति, सम्राट् अशोकः सिंहासनासीनः प्रविशति । इतिहासकृतः छायामूर्तिः प्रकटीभूय तं प्रतिचलति । ]

अशोकः—कोऽयमागच्छति ? [आहूयति] अपि कश्चित् विद्यते पश्यतु कोऽयं प्रविशन्नागच्छति [ कस्याप्यनभिगमने स्वगतम् ] क्रान्तेषु दिवसेषु यदा कुमारेण दशरथनाम्ना स्वस्य पितुरन्धस्य युवराजकुणालस्य नाम्ना मत्तो राज्यं स्वायत्तीकृतम् । [ अपवार्य ] मह्यं परिचारिका अपि दुर्लभा जाता: [इतिहासकृच्छायामूर्तिं प्रति] कस्त्वम् ?

**इतिहासकारः**—अहम् इतिहासकारोऽस्मि। विंशशताब्द्याः सर्व-लोऽपि महान् इतिहासकारः। मया सत्यस्यान्वेषणं कृत्वा स्व-पुस्तके भवत्सम्बन्धे किं लिखितम् ? जानाति भवान् ?

**अशोकः**—देवानां प्रियः प्रियदर्शी अशोक एतत् ज्ञातुं किमपि औत्कण्ठ्यम् नैव धारयति, यदेकः क्षुद्र इतिहासकारः तस्य सम्बन्धे किं लिखति। यतो हि सम्राट् अशोको महानस्ति।

**इतिहासकारः**—किंतु मदीया मान्यता अस्ति यद् भवान् महान् नास्ति केवलं सत्तालोलुपः राजनीतिज्ञ एवास्ति।

**अशोकः**—किं सत्तालोलुपो राजनीतिज्ञः ?

**इतिहासकारः**—अथ किं केवलं सत्तालोलुपो राजनीतिज्ञः। भवता सम्राट्पदप्राप्त्यै स्वभ्रातॄणां हत्या कृता। स्वकीयमार्गस्य निष्कण्टकत्वाय स्वोत्तराधिकारिणो बलात् बौद्धभिक्षुतां नीत्वा देशतो निष्कासिताः, साम्राज्यविस्तारतः प्राक् तु भवता कलिंगे हत्याकाण्डः कृतः, पश्चात् लोकनिन्दाभयात् निजं बौद्धत्वं घोषितम्। तदप्येतदर्थं यत् जनतायाः बहुमतः बौद्ध आसीत्। स भवतां नामावरणं करोति। मया स्वकीये पुस्तके भवतोऽस्य रूपस्य समुल्लेखः कृतः।

**अशोकः**—तस्य सम्राजोऽशोकस्य—यः इन्द्रादपि अधिकबलवान् तथा रामचन्द्रादपि अधिकः प्रजापालक आसीत्। त्वया एतादृश उल्लेखः कृतः नाशय एतादृशं पुस्तकम् [**चीत्कृत्य**] नाशय तत् पुस्तकम् ! [**घण्टां नादयति**]। [**अशोकस्य घण्टानादसमकालमेव इतिहासकृतो हस्तंगततमालवर्तिका दह्यते पश्चाद्वर्तीः पटः पतति, इतिहासकारः ससम्भ्रमम् उत्तिष्ठति तथा तद्हस्तात् तमालवर्तिका पाण्डुलिपौ पतति। तस्मिन्नेव समये तीव्रप्रकाशो भवति, दशवर्षीयो विजयः प्रविशति, यः इतिहासकृत्सम्भ्रमेण अशङ्कम् तमभिपश्यति, इतिहासकारः शीघ्रतया तमालवर्तिकामुत्थाप्य दह्यमानपृष्ठानि निर्वापयति।**]

**इतिहासकारः**—[ **अर्द्धदग्धानि द्वित्रिपृष्ठानि समुत्थाप्य** ] पर्याप्तं सुरक्षितम्, अन्यथा त्रिंशद्वर्षाणां परिश्रमोभस्मसाद्भविष्यति।

**विजयः** - पितृ-चरण ! पुस्तकं चेत् अज्वलिष्यत्तर्हि किमभविष्यत् अहं प्राप्तवयस्को भूत्वा एतस्मादपि बृहदाकारं स्थूलं पुस्तकं निर्मास्यामि ।

इतिहासकारः—[**दग्धपृष्ठानि पाण्डुलिपेरुपरि निदधत् स्मयते तथा विजयस्य मस्तके करं न्यस्यन्**] किं पाठयन्ति इतिहासाध्यापकास्त्वाम् ?

**विजयः**—ते कथयन्ति यतप्रथमं मनुष्या अतीव असभ्या अभवन् ।

**इतिहासकारः** –कोऽत्र सन्देहः ? [**भाषणशैल्या**, सभ्यताया अभ्युदयकालेऽस्मिन् प्रत्येकपूर्वभाविवंशानुकमः आगामिसन्ततेरधिकतयाऽसभ्य एव सिद्धः ।

**विजयः**—पितृचरण! तर्हि किम् भवन्तः मत्तोऽधिकमसभ्याः सन्ति ?

[**पटाक्षेपः**]

●

**ओजस्वी मधुरः प्रसादविशदः संस्कारशुद्धोऽभिधा,**
**भक्तिव्यक्तिविशिष्टरीतिरुचितैरर्थैर्धृतालङ्कृतिः ।**
**वृत्तस्थः परिपाकवानविरसः सद्वृत्तिरप्राकृतः,**
**शस्यः कस्य न सत्कविर्भुवि यथा तस्यैव सूक्तिक्रमः ।।**

—महाकवि-जगद्धरभट्टस्य

# बृहद्वामनपुराणस्योपलब्धाध्यायः

श्री श्रीमन्नारायणद्विवेदी

लघुभागवतामृतनाम्नि पुस्तके बृहद्वामनपुराणस्य षट् श्लोका उद्धृताः सन्ति। यत्र भगवता कृष्णेन स्वरासलीलाया माहात्म्यं वर्णितम् [लघुभागवतामृतम् पृ० १७३]। अवशिष्टेषु पञ्चसु श्लोकेषु ब्रह्मणा भृगवे तथाऽन्येभ्यो वृन्दावनस्य गोपिकानां महिमा निगदितः। यासां चरणरजः प्राप्तुं स्वयंभूः षष्टिसहस्रवर्षाणि तपस्तेपे। यथा श्रीबृहद्वामने - 'षष्टिवर्षसहस्राणि मया तप्तं तपः पुरा।

नन्दगोपव्रजस्त्रीणां पादरेणूपलब्धये।

तथापि न मया प्राप्ता तासां वै पादरेणवः॥'

इमानुद्धृतश्लोकानाधारीकृत्य डा० राजेन्द्रचन्द्र हाजरा महोदयो वक्ति यदियं वैष्णवकृतिरस्ति तथाऽस्मिन् ग्रन्थे मुख्यरूपेण गोपीकृष्णलीलावर्णनं विद्यते। उपलब्धवामनपुराणे च कृष्णलीलासम्बन्धि किमपि प्रकरणं नास्ति। अत इदं पुराणं बृहद्वामनाद् भिन्नमस्ति। यदि काचिद् वामनोपपुराणनाम्नी रचना भवेत्तर्हि सा बृहद्वामनपुराणतो भिन्नैव स्यात्। फलतः डा० हाजरा महोदयो कृष्णलीलावर्णनेन बृहद्वामनपुराणस्य रचनामर्वाचीनां मनुते। डा० महोदयेनास्योपलब्धपाण्डुलिपिविषये काचन चर्चा न कृता।

बड़ौदा - शोध - संस्थाने 'व्रजवधूचरणरजोमाहात्म्यम्' इत्येतन्नाम्नी पाण्डुलिपिर्वर्तते यस्यां तस्या बृहद्वामनपुराणात उद्धृतत्वस्योल्लेखोऽस्ति। तस्याः पाण्डुलिप्याः पत्रत्रयमेवोपलभ्यते, यत्र त्रिशत् श्लोकाः सन्ति।

प्रयागसंग्रहालये तस्य पुस्तकस्यैका खण्डिता 'प्रतिः' संरक्षिताऽस्ति। इयं 'प्रतिः' अपि बृहद्वामनपुराणान्तर्गत 'गोपीचरणरजोमाहात्म्योऽध्यायः' इत्यंशपर्यन्तमेव सीमिताऽस्ति। अस्यां पाण्डुलिप्यामपि पत्रत्रयमेवोपलभ्यते। तत्र श्लोकाश्च त्रिशत् एव। पञ्चपृष्ठेषु अध्यायसमाप्तिर्भवति। पत्रद्वयं खण्डितं वर्तते अस्या लिपिकालः संवत् १७३४ उल्लिखितोऽस्ति। बड़ौदायाः प्रयागस्य च 'प्रत्योः' नामपरिवर्तनं विहाय सर्वं वस्तु समानमेवास्ते। डा० हाजरामहोदयेन लघुभागवतामृताद् बृहद्वामनपुराणस्य ये श्लोका उद्धृतास्तेऽस्यामपि विद्यन्ते।

अत इदं सम्भाव्यते यद् बृहद्वामनपुराणमेकं विस्तृतमुपपुराणमासीत्, यस्य रचना पश्चात् अभवत्। तस्य लोकप्रियप्रसंगा आंशिकरूपेण विद्वद्भिरगृह्यन्तापि। शोधक्षेत्रे सहायकसामग्रीदृष्ट्या प्रयागसंग्रहालयस्थप्रतेः अविकलाः पाठोऽत्र प्रस्तूयते। आशासे, अस्याः टिप्पण्याः प्रकाशनानन्तरं बृहद्वामनपुराणस्य कस्याश्चित् पूर्णप्रतेरांशिकप्रतेर्वा ज्ञानं प्राप्तं भवेत्, या कस्यचिद्विदुषः स्वोपान्ते ज्ञातृत्वे वा संस्थिता स्यादिति।

पाण्डुलिपिविवरणन्तु इत्थं वर्तते—

**बृहद् वामन पुराण—पत्राणि ५**

**लिपि कालः सं० १७३४। पत्रद्वयं नास्ति।**

**पुस्तक संख्या २३३। २३५**

पत्राणि ३, श्लोका: ३०
दाता—ठाकुरप्रसादद्विवेदी, प्रयाग: । खण्डितप्रति: ।
संग्रहालय: — प्रयागसंग्रहालय: ।

तस्यईशितृत्व स्वरूपनिर्गुण ब्रह्म सर्वस्य चाहं संनिविष्टो मत्त स्मृतिर्ज्ञानमदोहनंच इत्यादिनोक्तः ।

बीज प्रद: पिता इत्यादिनोक्तम् तस्यांश: सगुणब्रह्म ! ममैवाशे जीवलोके जीवभूत: सनातन: इत्यादिनोक्तः ।

यद्घनीभूतं ब्रह्म —

तत्सच्चिदानन्दाकारं परब्रह्म ब्रह्मणोहि प्रतिष्ठाहममृतस्याव्ययस्य च ।

इत्यादिनोक्तमिति यद्ब्रह्म तदेव धनीभूतं श्रीकृष्णाख्य: ।।
परं ब्रह्म तथैव परमात्मेति अपृथकत्वस्वरूपं प्रसिद्धम् ।

तदुक्तं सात्वततंत्रे —

यथा भानो प्रकाशस्यमंडलस्या पृथक्विस्थिति:
तथा श्रीकृष्णदेवस्य ब्रह्मण: परमात्मन: ।
तस्मात् श्रीकृष्णाख्यं परं ब्रह्म परमात्मा आश्रय इति
दिक् ।।६।।

श्री चक्रवर्ती चूड़ामणेरेतत्

वेदवन्निःसृतं मन्ये पुराणार्थं विचक्षणैः।
पुराणमन्यथा कर्त्तुः तिर्यग्योनिमवाप्नुयात् ॥७

भारते—

विभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यति।

श्री ब्रह्मोवाच—

षष्टिवर्ष सहस्राणि मया तप्तं तपः पुरा
नंद-गोप-व्रजस्त्रीणां पादरेणूपलब्धये । १
तथापि न मया प्राप्तास्तासां वै पादरेणवः
श्रुत्वैतद्ब्रह्मणो वाक्यं भृगुः प्राहाथ सादरम् ॥ २

भृगुरुवाच --

वैष्णवानां पादरजो गृह्यते त्वद्विधैरपि
सततं ब्रह्मणो लोके वैष्णवा नारदादयः ॥३
तेषां विहाय गोपीनां पादरेणुस्त्वयापि यत्
वीक्षितं संशपो मेऽत्र को हेतुस्तद्वद प्रभो! ४
ततो ब्रह्मा भृगुं प्राह विचिन्तयित्वा पुरातनीं
कथां सर्वश्रुतीनां यद्रहस्यं परमाद्भुतम् ॥५

ब्रह्मोवाच—

न स्त्रियो व्रजसुन्दर्य्यः पुनस्ताः श्रुतयः किल
नाहं शिवश्च शेषश्च श्रीश्च ताभिः समाः क्वचित् ॥६

प्राकृते प्रलये प्राप्ते व्यक्तेऽव्यक्तं गते पुरा
शिष्टे ब्रह्मणि चिन्मात्रे कालमायाति चोदरे ॥७

ब्रह्मानंदमयो लोके व्यापी वैकुण्ठसंज्ञितः
निर्गुणं नाद्यनन्तश्च वर्तते केवले हरौ ॥८

अक्षरं ब्रह्म परमं वेदानां स्थानमुत्तमम्
तं लोकवासी तत्रस्थ स्तुतो वेदैः परात्परः ॥९

चिरं स्तुत्या ततस्तुष्टः पक्षं प्राह तान् गिरा
तुष्टोऽस्मि ब्रूत भो प्राज्ञा! वरं यन्मनसीप्सितम् ॥१०

वेदा ऊचुः

नारायणादि रूपाणि ज्ञातान्यस्माभिश्च्युत
सगुणब्रह्म सर्वं हि वस्तु बुद्धिर्न ते पुनः ॥११

ब्रह्मेति पठ्यतेऽस्माभिर्यद्रूपं निर्गुणं परम्
वाङ्मनोगोचरातीतं ततो नु ज्ञायते तु तत् ॥१२

आनंदमात्रमिति यद्वदन्ति हि पुराविदः
तद्रूपं दर्शयास्माकं यदि देयो वरो हि नः ॥१३

श्रुत्वैतद्दर्शयामास स्वलोकं प्रकृतेः परम्
केवलानुभवानन्दमात्रमक्षरमध्यगम् ।।१४

यत्र वृन्दावनं नाम वनं कामदुहैर्द्रुमैः
मनोरमनिकुञ्जाढ्यः सर्वर्त्तु सुखसंयुतः ।।१५

यत्र गोवर्द्धनो नाम सुनिर्भरदरीयुतः
रत्नधातुमयः श्रीमान् सुपक्षिगणसंकुलः ।।१६

यत्र निर्मलपानीया कालिंदी सरितां वरा
रत्नबद्धोमयतटी हंसपद्मादि-संकुला ।।१७

नानारासरसोन्मत्तं यत्र गोपी कदम्बकम्
तत्कदम्बकमध्यस्थः किशोराकृतिरच्युतः ।।१८

दर्शयित्वेति तान्प्राह ब्रूत किं करवाणि वः
दृष्टो मदीयो लोकोऽयं यतो नास्ति परम्वरम् ।।१९

वेदा ऊचुः-

कंदर्पकोटिलावण्ये त्वयि दृष्टे मनांसि नः
कामिनीभावमासाद्य सवाच्चान्यं नसंशयः ।।२०

यथा त्वल्लोकवासिन्यः कामतत्त्वेनगोपिकाः
भजंति रमणं मत्वा चिकीर्णा जनिनस्तथा ।।२१

श्रीभगवानुवाच—

दुर्लभो दुर्घटश्चैव युष्माकं सुमनोरथः
मायानुमोदितः सम्यक् यतो नास्ति परं वरम् ॥२२
आगमिनि विरिञ्चौ तु तु जाते सृष्टयर्थमुद्यते
कल्पसारस्वतं प्राप्य व्रजे गोप्यो भविष्यथ ॥२३
पृथ्वी भारते क्षेत्रे माथुरे ममंडले
वृन्दावने भविष्यामि प्रेयान् वो रासमंडले ॥२४
जारधर्म्मेण सस्नेहं सुदृढ सर्वतोधिकम् ।
मयि सम्प्राप्य सर्वाणि कृतकृत्या भविष्यथ ॥२५

ब्रह्मोवाच—

श्रुत्वैतच्चियन्तयन्त्यस्तारूपम् भगवतश्चिरम् ।
उक्तकालंघमासाय गोप्यो भूत्वा हरिं गताः ॥२६
स्त्रियो वा पुरुषो वापि भर्त्तृभावेन केशवम्
दति कृत्वा गतिं यान्ति श्रुतीनां नान्न संशयः ॥२७
नन्दगोपव्रजस्त्रीणामतः पादरजो मया
वीक्षितं पुलकाः सम्यक्मायताः श्रु तयोम ताः ॥२८
तासां पादरजो स्पृष्टवा नित्यं वृन्दावने भुवि
तत्प्राप्य तत्कामनया यात्यप्रेहो गोपिकागतिम् ॥२९

**श्रुत्वैतत् ऋषयो वाक्यं ब्रह्मणः परमेष्ठिनः।**
**सर्वात्मना प्रपन्नास्ते श्रीगोपीजनवल्लभे ॥३०**

इति श्री बृहद्वामनपुराणे ब्रह्मभृगुसंवादे श्रीगोपीनां चरणरजमाहात्म्योऽध्यायः ॥ श्रीमद्भागवते । स्त्रिय उरगेन्द्र भोग भुजदंड विमुक्तधियो वयमपि तसमा इत्यादि ।

संवत् १७३४ समये भाद्रपदचतुर्थी कृष्णपक्षे चन्द्रवासरे ।

## आगतपत्राणि समीक्षणानि च

●

**महामहिम श्री निरञ्जन तीर्थ शङ्कराचार्य महानुभावानाम्**

श्री गोवर्धन मठ पुरी ।
१८-२-६६

श्रीमत्सु प्रभातशास्त्रिषु नारायणस्मरणम् । श्रीमतां संगमनी दृष्टा । तत्रत्या लेखाः सुविचारपूर्णाः प्रौढपाण्डित्यप्रोताश्च । विशेषतः स्त्रीणां संन्यासविषये या निर्भीकविचारणा सम्पादिता तां दृष्ट्वा प्रमुदितं चेतसा । एतादृशा एव शास्त्रसिद्धान्तसंरक्षणपूर्णा लेखा यद्यत्र स्थानं लभेरन् तदा सर्वदास्माकमाशीर्वादपात्रतां भजिष्यति पत्रिकैषा ।

महामण्डलेश्वर **श्री महेश्वरानन्द** महोदयानाम्

संन्यासाश्रमः
जिला-पारला
बम्बई-५६

श्रीमद्विद्वद्वर प्रभातशास्त्रिप्रभृति महानुभावद्वारा संचालिता 'संगमनी' संस्कृतपत्रिका समुपयुक्तसामयिक-राष्ट्रसमाजहितकर-लेख-ग्रन्थादि प्रकाशनद्वारा सफला बहुलप्रचारा संस्कृतभाषागौरवाभिवर्धिनी यशस्विनी च भूयादित्यस्ति मे मंगलप्रार्थना शुभाशीर्वादश्च ।

वाराणसेय संस्कृतविश्वविद्यालयस्य
भूतपूर्वोपकुलपति **श्रीसुरतिनारायणमणित्रिपाठिनाम्** वाराणसी
९-२-६६

सुरगिरां समाराधनाय प्रसाराय प्रचाराय च सर्वथा पूतात् संगमस्थलात् प्रकाशितेयं संगमनी विदुषां मानसानि मिथस्संगमयन्ती, विदधती च संस्कृतजगति प्रकाशं नित्यं समेधताम् ।

एवंविधपत्रिकाणां बाहुल्येन प्रकाशनं महते हिताय श्रेयसे च राष्ट्रस्य प्रभविष्यति, विशेषतो यत्र दुर्लभानां लुप्तप्रायाणाममुद्रितानां ग्रन्थानां सम्पाद्य क्रमशः प्रकाशनम् ।

सम्पादकश्चास्य श्री प्रभात शास्त्री तरुणः कर्मठः प्रबुद्धश्चेति नूनमस्याः सुप्रभातम् ।

त्रैमासिकीयं मासिकी, पाक्षिकी साप्ताहिकी तदनु दैनिकी भूयात् इति मे मनोभिलाषः ।

महामहोपाध्यायः कविरत्न **पण्डित लक्ष्मीनारायण द्विवेदिनः** फर्रुखाबादः
२-२-६६

भवत्प्रेषिता 'संगमनी' मया सम्यगवलोकिता । इयं संगमनी दिष्ट्या व्युत्पन्नैरव्यस्तविचक्षणैर्निबद्धलेख—कविता—रचना - परिपूर्णेति मम मनसोऽधिकप्रीति संजननीति भवतां श्रमं भूरिभूर्यभिनन्दयामि । आशासे च यदियं संगमनी चिरं संस्कृतजगतो हितमावहन्ती प्रकाशताम् ।

**श्री बनवारीलाल पाठकः** मथुरा ।

गीर्वाणवाणी प्रगति-प्रतिवेदिका भारतीसंस्कृतिसंरक्षिका प्राच्यप्रतीच्य शैलीसमान्विता 'संगमनी' नितरां प्रमोदयेत् इति कामयामहे ।

**श्री विद्याधरशास्त्री** बीकानेर: ।

२।२।६६

संगमनी प्रवेशाङ्कं सम्प्राप्य नितरं प्रीतोऽस्मि। आशासे नियतरूपेणेयं प्रकाशमाना आमोदयति सर्वेषां विदुषां चेतांसि ।

**श्री सुरेन्द्रदत्त अवस्थी** औरैया ।

द्युसद्वाचः प्रचाराय प्रसारायात्मसंस्कृतेः ।
संगमनी भवेदर्हा सचेतोमोदकारिणी ॥

**श्री रामयत्नशुक्लः** वाराणसी

भवत्प्रेषितां पत्रिकां 'संगमनीम्' अधीत्य तद्गतोद्देश्यविषयान् अनुभूय भृशं सन्तुष्यन् इयं ओजस्विनी भूयादिति भगवन्तं भवानीपतिं प्रार्थयते ।

●

**किं हारैः किमु कङ्कणैः किमतुलैः कर्णावतंसैरलम्,**
**केयूरैर्मणिकुण्डलैरलममलं साडम्बरैरम्बरैः ।**
**पुंसामेकं मण्डितं पुनरिदं मन्यामहे मण्डनम्,**
**यन्निष्पीडितपार्वणामृतकरष्यन्दोपमा उद्भूटाः ॥**

वल्लभदेवस्य

## आस्माकीनम्

●

### दिवङ्गतोमहामहोपाध्यायपण्डितगिरिधरशर्मचतुर्वेदिमहाभागाः

संस्कृतवाङ्मयस्य दिशाप्रमुखो विद्वान् चतुर्वेदिगिरिधरशर्मा विगताषाढमासे पञ्चनवतितमे वर्षे वयस्यविमुक्तक्षेत्रे स्वं नश्वरं कलेवरममुञ्चत। इयं संस्कृतजगतो महती दुःखदघटना वर्तते। चतुर्वेदिमहाभागेन संस्कृतजगतो हिन्दीजगतश्च या विविधाः सेवाः कृता, ताः शाश्वतिकरूपेणाविस्मरणीयाः स्थास्यन्ति। स तस्या भारतीयविद्वत्परम्परायाः प्रतिनिधिरासीत्, याऽर्थयशःकामनाया दूरे स्थित्वा यावज्जीवं विद्योपासनायां श्रमकरणं स्वीयं लक्ष्यं मन्यते। आङ्ग्लशासनस्य स्थापनया सह यस्याः परम्पराया अवसानं प्रारभ्यत तथाऽधुना देशस्वातन्त्र्यस्य पश्चादपि यस्याः परम्पराया रक्षणस्य न कोऽपि समुचितोपायो विहितः, तस्याश्चतुर्वेदिनो निधनानन्तरं हन्त, न कोऽपि तादृशः प्रतिनिधिरुपलभ्यते! चतुर्वेदिमहाभागस्य जीवनकालेऽस्माभिस्तस्य राष्ट्रीयसम्मानं प्रति कापि जागरूकता नह्येव प्रादर्शि; किन्तु यदीदानीं तदन्तानन्तरं तस्य विद्वत्परम्परामपि विस्मरिष्यामः न खलु तां समुचितप्रश्रयेण सम्मानेन च सम्भावितां विधास्यामस्तर्हि नूनं भारतस्य राष्ट्रीयविद्यागरिम्णो लोपः स्यात्।

महामहोपाध्यायः सम्पूर्णसंस्कृतवाङ्मयस्य मर्मज्ञो विद्वान् आसीत् विशेषतः स तद् वेदपुराणवाङ्मयं समग्ररूपेणाध्यकरोत्

यद्गूढं रहस्यमयञ्च निगद्यते। तेन विदुषा संस्कृतविद्यायाः समुपासना अप्रतिममनीषिविद्यावाचस्पतिमधुसूदनझामहोदयस्य चरणेषु व्यधीयत। झामहोदयो जयपुरमहाविद्यालयस्य प्राचार्यः सुविलक्षणधिषणासम्पन्नो वेदादिसाहित्यस्य पारदृश्वाऽऽसीत्। चतुर्वेदिनाऽपि स्वगुरुणेवानेके ग्रन्था व्यरच्यन्त। तेषु 'गीताविज्ञानं' 'पाणिनीय परिचयः', 'महाकाव्य-संग्रहः, 'शतपथब्राह्मणः, 'पुराणपरिशीलनम्' इत्याख्या ग्रन्थाः प्रमुखाः सन्ति। तेन वार्द्धक्ये स्वीया सर्वश्रेष्ठकृतिः 'वैदिकविज्ञान और भारतीय संस्कृति' इति राष्ट्रभाषार्थं समर्प्यत। अयं ग्रन्थः १९६२ तमे ख्रीस्ताब्दे भारत-शासनस्य 'साहित्य अकादमी' संस्थया पुरस्कृतः।

चतुर्वेदिमहाभागो न केवलं विद्याया एकान्तसाधक एव, अपि तु समयानुसारेण संस्कृतभाषायास्तत्साहित्यस्य च प्रचारप्रसारार्थं याव-ज्जीवं प्रायतत। मृतप्रायसंस्कृतसाहित्यसम्मेलनस्य निखिलभारतीयरूपे पुनः स्थापना अमुष्य प्रयत्नवशादेव सञ्जाता। 'संस्कृतरत्नाकर'-पत्रिकायाः समारम्भश्चतुर्वेदिनैव व्यधीयत। तस्मिन् सङ्घटनकर्तुः कुशल-पत्रकारस्य चाप्रतिमा योग्यताऽऽसीत्। चतुर्वेदिमहाशयः समयाभिज्ञो मनीषी, न केवलं परम्परावाद्येव। अतएव स हिन्दीमेव भारतस्य राष्ट्रभाषामन्वमोदयत्।

ऋषिपरम्परायाः प्रतीकरूपस्यास्य विदुषो दिवङ्गमनेन संस्कृतजगद-पूरणीयां महद्धानिमनुभवति। वयं सप्रश्रयमीश्वरान् प्रार्थयामहे यत्ते संस्कृतजगतो राष्ट्रीयविद्यापरम्पराया अभावमिमं सत्वरं पूरयेयुः।

**वाराणसेय संस्कृतविश्वविद्यालयो निवेद्यते**

मोदावसरोऽयं यद् वाराणसेयसंस्कृतविश्वविद्यालयस्य स्थापनातः

पाठशालीयपरम्परयाऽध्येतृणां छात्राणां कृतेऽपि शोधकार्यस्य प्रेरणा सौविध्यञ्च सञ्जातम् । अनेन संस्कृतवाङ्मयस्याध्ययनानुशीलनयोर्न केवलं वृद्धिर्भविष्यति नाविन्यमप्यागमिष्यति । इदमेवोद्दिश्य विश्वविद्यालयेन शोधसंस्थानमपि स्थापितम् । तथाऽन्यविश्वविद्यालया इवायमपि 'पी.एच्.डी.' सदृशं विद्यावारिधिनामकमुपाधिं निष्णातशोधस्नातकेभ्यो वितरति । अनेन शुभारम्भेण सह संस्कृतच्छात्राणां स्थितिं तेषां सौकर्यं च ध्यानपथे निधाय विश्वविद्यालयेन शोधस्नातकानां पञ्जीकरणनियमेषु किञ्चिन्मार्दवं विधेयमस्ति । नियममार्दवस्य स्पष्टीकरणमिदं विद्यते—विश्वविद्यालयस्यैष नियमो यत् कश्चनच्छात्रो विश्वविद्यालय एव स्वं नामोल्लेख्य तत्र विशंतिमासान् यावदुपस्थाय शोध-स्नातको भवितुमर्हति तथा स्वीयं शोध-प्रबन्धं प्रस्तुतीकर्तुं शक्नोति । उत्तरप्रदेशे आचार्यपरीक्षां यावन्मान्यतां प्राप्तवन्तोऽनेके विद्यालयाः सन्ति, तत्र प्रतिभाशालिनो विद्यार्थिनो विश्वविद्यालयीयपरीक्षामुपविश्योत्तमाङ्कैरुत्तीर्णतां प्राप्नुवन्ति । किन्तु ते शोधकार्यं तदा कर्तुमर्हन्ति यदा वाराणस्यां विंशतिमासान् निवसेयुः । परं बाहुल्येनार्थिकसङ्कट-ग्रस्ताः संस्कृतच्छात्रास्तत्र निवसितुमसमर्था विश्वविद्यालयीयशोधकार्यसुविधातो वञ्चिताः स्युः । एवञ्च तेषां प्रतिभायाः सदुपयोगो न स्यात् । अतएवास्माकं निवेदनं यदर्थकृच्छ्रोपहतानां संस्कृतविद्यार्थिनां स्थितिं ध्यात्वा विश्वविद्यालयः स्वसम्बद्धानामाचार्यपरीक्षां यावत्प्राप्तमान्यतानां विद्यालयानां माध्यमेनापि शोधस्नातकेभ्यः शोधकार्यस्य पञ्जीकरणस्य च सौविध्यं प्रदद्यात् । आशास्महे, विश्वविद्यालयाधिकारिणो ध्यानं दद्युरिति ।

# Sangamani

## Sanskrit Quarterly Magazine

Edited by
**Prabhat Shastri, Sahityacharya**

Annual Subscription
Rs. Twelve only
Rs. 3/50 per copy
[ IN FOREIGN ]

•

Published by Prabhat Shastri for Sanskrit Sahitya Parishad, Daraganj, Allahabad-6 ( India ) and Printed by him at—

Onkar Press, Allahabad (India)

पंजी० सं० आर्० एन्० ९७४४ ● Reg. No. R. N. 9744

# पाठकान् प्रति विनिवेद्यन्ते

●

'संगमनी' पत्रिकाऽनेनाङ्केन निजजीवनद्वितीयाब्दं प्राविशत्। भवन्तोऽस्याः प्रियपाठकाः। वर्षैकात् पत्रिकेयं भवत्सेवायां प्रेष्यते। जानन्त्येव भवन्तो यदियं प्रयागस्थसंस्कृतसाहित्यपरिषदा केवलं संस्कृतभाषायास्तत्साहित्यस्य च प्रचारप्रसाराबुद्दिश्य प्रकाश्यते। संस्कृतवाङ्मयस्य शोधात्मकमनुशीलनमस्माकं महत्त्वपूर्णं लक्ष्यं विद्यते।

पत्रिका स्वोद्देश्ये तदैव सफला स्याद्यदा तस्याः संस्कृतानुरागिणः पाठकास्तत्प्रचारप्रसारयोरपि स्वकीयं यथासम्भवं सहयोगं प्रदद्युः।

पत्रिकायाः प्रियपाठकानाम्पुरतोऽस्माकं निवेदनं यत्ते स्वयमस्या ग्राहको भूत्वा पत्रिकाया विकासे साहाय्यं ददतु तथा स्वप्रयत्नैरेकमेकं ग्राहकं निर्माय पुण्यकार्यस्य श्रेयो विन्दन्तु।

पूर्णं विश्वसिमः—'संगमन्याः' प्रचारप्रसारयोः पाठकानाम् एवंविधं सहयोगं प्राप्स्यामो वयमिति।

**संगमनी–कार्यालयः**

**दारागंज–प्रयागः (उत्तर प्रदेशः)**

# संगमनी

संस्कृत त्रैमासिकी

द्वितीये वर्षे
द्वितीयोऽङ्कः



संस्कृत-साहित्य-परिषद्
दारागंज-प्रयागः

उत्तर प्रदेशीय शासन के शिक्षा-विभाग द्वारा
समस्त विद्यालय, महाविद्यालय
एवं दीक्षा-विद्यालयों में पुस्तका-
लयों के लिए क्रयार्थ स्वीकृत•

## लेख-सूची

# संगमनी

# Sangamani

Sanskrit Quarterly

संस्कृत-त्रैमासिकी

द्वितीयवर्षे द्वितीयोऽङ्कः

२०२३ वैक्रमाब्दः



सम्पादकः

**प्रभात शास्त्री**

सहसम्पादकौ

**तारिणीश झाः**
व्याकरणवेदान्ताचार्यः

**जयशङ्कर त्रिपाठी**
साहित्याचार्यः, एम्० ए०



प्रयागस्थ-संस्कृत-साहित्य-परिषदः प्रकाशनम्

कार्यालयः
संगमनी
दारागंज—प्रयागः

वार्षिकं मूल्यम्
रु० ५·००
प्रत्यङ्कम् रु० १·५०

परामर्श-समज्या

डा० हरवंशलाल शर्मा (अलीगढ़म्)

श्रीबालकृष्णराव: (प्रयाग:)



लक्ष्यं योजना च

- इयं संगमनी संस्कृतस्य निःस्वार्थसेवाया नामान्तरम् ।
- अस्यां संस्कृतवाङ्मयविषये गवेषणापूर्ण-लेखानां परिचर्यायाश्च प्रकाशनम्,
- संस्कृतभाषाया अप्रकाशितग्रन्थस्य च प्रकाशनम् भवति ।
- अनया संस्कृतवाङ्मयस्य संस्कृतभाषायाश्च प्रचाराय प्रसाराय च प्रयत्नो विधीयते ।

# संगमनी

अहं राष्ट्री संगमनी वसूनाम्

—ऋग्वेदे १०।१२५।३

२ वर्षे • संवत् २०२३ वि० • २ अङ्कः

## शर्मणे वः

•

शृङ्गारं हैमवत्याः प्रथयति धनुषा
वीरमास्येन हास्यं,
बीभत्सं स्रक्कपालैर्भयमहिपतिना
भ्रूविजृम्भेण रौद्रम् ।
कारुण्यं प्लुष्टपत्न्याद्भुतमरुण
विधूषर्बुधैर्योऽक्षिभाग्भिः,
शान्तं चित्तेन भूयात्स नवरसमयः
शङ्करः शर्मणे वः ॥

—माधवभट्टः

सूक्ति-कवीनाम्

# हेमन्तसुषमा

मूले हरिन्ति किञ्चित्पार्श्वे पीतानि लोहितान्यग्रे ।
मधुरसुरभीणि सम्प्रत्यगाढपाकानि बदराणि ।।

—अभिनन्दस्य

कटुमधुराण्यामोदैः पर्णैरुत्कीर्णपत्रभङ्गानि ।
दमनकवनानि सम्प्रति काण्डैरेकान्तपाण्डूनि ।।

—अभिनन्दस्य

लघुनि तृणकुटीरे क्षेत्रकोणे यवानां
नवकलमपलालस्रस्तरे सोपधाने ।
परिहरति सुषुप्तं हालिकद्वन्द्वमारात्
स्तनकलशमहोष्माबद्धरेखस्तुषारः ।।

- भवभूतेः

इदानीमर्घन्ति प्रथमकलमच्छेदमुदिता
नवीनान्धस्थालीपरिमलमुचो हालिकगृहाः ।
उदञ्चद्दोर्लीलारणितवलयाभिर्युवतिभि—
र्गृहीतप्रोत्क्षिप्तभ्रमितमसृणोद्गीर्णमुसलाः ।।

—योगेश्वरस्य

डा० द्विजेन्द्रनाथ शुक्लः

# भारतीयस्थापत्यकला

भारतीय-संस्कृतेः आध्यात्मिकं पक्षमेव सर्वातिशायिनं मन्वाना जनाः ( वैदेशिकाः स्वदेशीया अपि ) तस्याः भौतिकं पक्षं प्रविरलविषयमविषयं वा स्वीकुर्वाणा अद्यत्वेऽखिलेष्वपि भौतिकेषु पाश्चात्त्यानामनुकरणं कुर्वन्तस्स्वीयं भौतिकं विलासं विस्मृतवन्त इव दृष्टिपथे पथिकायन्ते। एतेन मन्ये भारतीय-संस्कृतेर्नेदं यशोगानं विकत्थनमेव। यस्यां संस्कृतौ वेदाः प्रादुरभूवन् तस्यामेवोपवेदा अपि निबद्धा बभूवुः। वेदानां किं रहस्यं किञ्च तेषां श्रेयः अत्र विषये विदुषां सम्मतं मतमेव नास्य कोऽपि विशेषस्स्फारोऽत्रापेक्षेत। परमुपवेदा अस्माकं विज्ञानानि पारिभाषिकाणि शास्त्राणि कलाप्रबन्धाश्चेत्यस्माकमस्ति कापि विज्ञप्तिः। चतुःप्रकारं स्थापत्यम्, अष्टधा च चिकित्सितम्, सप्तांगो धनुर्वेदः, स्वरग-पदग-लयग-अवधानात्मकं संगीतम्, घनवितत-तत-सुषिरात्मकं वाद्यम्, लास्य-ताण्डवादिनृत्तनृत्यात्मकं नाट्यम्, चतुष्षष्टिकलाश्चेति सर्वं विद्या-विज्ञान-कलापारम्पर्यं कुतः प्रादुर्भूतमित्यत्र जिज्ञासायामुपवेदा एवास्माकं शरणमिति श्रीमन्तः विदांकुर्वन्तु।

वेदा सर्वज्ञानमया नात्राहं विवदे। संहिता-ब्राह्मण-आरण्यक-उपनिषदादिसंवलितो वेदभागः प्रायेणोपासनापरः यत्र देवता-विज्ञानं, यज्ञसंस्था आत्मज्ञानं ब्रह्मविज्ञानं वा विशेषेण प्रस्तूयते। वेदाश्च त्रयीतिनाम्ना प्रथन्ते इति कृत्वाऽथर्ववेदात् शिक्षाकल्प-व्याकरण-निरुक्त-ज्यौतिषच्छन्दोभिधेयेभ्यः वेदांगेभ्यः गान्धर्वायुर्वेदधनुर्वेदार्थ-स्थापत्याद्युपवेदेभ्यश्च

भौतिकानां विज्ञानानां पारिभाषिकाणां च पन्थाः प्रवर्तितो बभूव। वेदेभ्य एवोपवेदा उत्पन्नाः। वेदानामुपवेदाः आसन्—तथाहि आयुर्वेदः ऋग्वेदस्योपवेदः, धनुर्वेदः यजुर्वेदस्योपवेदः, गान्धर्ववेदः सामवेदस्योपवेदः, स्थापत्यवेदः अथर्ववेदस्योपवेदः, इत्यस्माकं पुराविदो वदन्ति। एतेनेदं सिद्धं भवति यदस्माकं संस्कृतौ परोक्षस्य प्रत्यक्षस्य च, अध्यात्मवादस्य भौतिक-वादस्य च, ब्रह्मज्ञानस्य जगद्विज्ञानस्य च द्वयोरपि समाना सनातना सरणिः सुतरां चकास्ते स्मात्राज्ञानमस्माकं भ्रान्तमेव धारणम्। अतएव महनीयेयं संस्कृतिर्या सर्वाभ्यः संस्कृतिभ्यस्सर्वतो ज्येष्ठा, गरिष्ठा, सर्वोत्कर्षेण विराजमानाद्यापि सन्तिष्ठते। तस्यां संस्कृतौ पक्षस्यैकस्य महिमानं कीर्तयन्त अपरस्याभावं ख्यापयन्तः जनाः किं भ्रान्ताः अभ्रान्ताः वेति भवन्तो विपश्चित एव प्रमाणम्। नैतत्तिरोहितं श्रीमतां यद्भारतीयसंस्कृतेः प्राणाः धर्म एवासीत्। अथातो धर्मजिज्ञासायाम् तत्राचार्यपादैः "यतोऽभ्युदयनिश्श्रेयससिद्धिः स धर्मः" इति यद् धर्मलक्षणं दत्तं तेनास्माकं संस्कृतौ भौतिकाध्यात्मिकपक्षद्वयस्यापि समानो विलास इति दृढं सिध्यति। अभ्युदयेनेह लौकिकानां विज्ञानकलाधीनानां सुखानां निःश्रेयसेन च ब्रह्मविज्ञानाधीनमोक्षापरनाम्नः पारलौकिकस्य मानवजीवनचरमोत्कर्षस्य परामर्श इति तु श्रीमन्तो विपश्चितो जानन्त्येव।

उपनिषदां सन्दोहे षड्दर्शनीसमारोहे प्रभूते च एतद्विषयकसाहित्यप्रबन्धे निःश्रेयसमधिकृत्य बहुविचारस्तस्य नात्रावसरः। सांसारिकमभ्युदयं चावलम्ब्य कानि विज्ञानानि कानि कानि च पारिभाषिकाणि शास्त्राणि के के च कला-प्रबन्धाश्च प्रवर्तितास्तस्यैवाद्यतन्यामस्यां कलागोष्ठ्यामभिनिवेशः। अतः श्रीमतां तत्रावधानं दीयमानमभ्यर्थये।

आयुर्वेदे आधुनिककैमिष्ट्रीविज्ञानस्य समावेशः, ऐतिह्येषु पृथ्वादिवृत्तान्तेषु पुराणेषु ज्यौतिषे च फीजिक्स-जियोलोजी-जियोग्राफीप्रभृतीनां नानाधुनिक-विज्ञानानां भौतिकशास्त्राणां च विलासः; धनुर्वेदे मिलीटरी साइन्सेत्यभिधाया अद्यतन-युद्ध-विद्याया विजृम्भणम्, गान्धर्ववेदे तौर्य-

त्रिकोपलक्षितानां संगीतनृत्यनाट्यादीनां समेषां प्रमोदविद्यानां समावेशः। अथर्ववेदे दण्डाचार-प्रचार-प्रभृतीनां सर्वासां नीतीनामाधुनिक-राजनीत्यर्थनीति-वाणिज्यादि-शास्त्राणान्तत्र गतार्थत्वम्। स्थापत्यवेदे नगर-जनभवन-राजभवन-देवभवनानाञ्च निर्माणन्तु सर्वे जानन्ति परं तत्रैव शय्यासन रचना-भूषणायुधविकल्पाः नाना-वर्गीय-प्रतिमा-प्रकल्पनाः अनेकजातिक-चित्रनिर्माणं बहुविधयन्त्र-रचना-चातुरी-त्यादि-बहुविधं स्थापत्यकौशलं विजृम्भते। इदं सर्वं भारतीयवास्तुशास्त्रेमिति सामान्य-विषयमुपजीव्य तेषु तेषु ग्रन्थेषु यथामति विचारितं प्रेक्षावतां श्रीमतामिति विदितप्रायमेव। वास्तुशास्त्रं स्थापत्यशास्त्रं वा शिल्पशास्त्रमपि संकीर्त्यते। शिल्पानां शिल्पिनां च बहुसंख्या बहुकोटयश्च। अतः प्रथमं शिल्पाणि कला वा संकीर्तनीयास्सन्ति। संस्कृते कला-विषयकाणि प्राधान्येन त्रीण्येव शास्त्राणि वास्तुशास्त्रं शिल्पशास्त्रं चित्रशास्त्रं च, यानि वास्तु शास्त्रं स्थापत्यशास्त्रं वेति नाम्ना प्रथन्ते। मानसारमयमत-शिल्परत्नादिषु द्राविड़ेषु विश्वकर्मवास्तुशास्त्रसमराङ्गणसूत्रधार-वास्तुशास्त्रापराजितपृच्छादिषु च नागरेषु वास्तुशास्त्रीय-ग्रन्थेष्वयमेव विलासः। यद्यप्यासीदेकः कालः यदास्माकं देशे चतुष्षष्टिकलानामेकः प्रौढः सम्प्रदायः प्रभूततमश्च प्रोल्लासो जागर्ति स्म। वात्स्यायन-कामशास्त्रेऽप्ययमुन्मेष लब्धप्रतिष्ठस्य तत्रभवतः यशोधरस्यापीयं मनीषा। शुक्राचार्यस्यापीदमेव समर्थनम्। तथापि कालक्रमेण परिवर्तमानायामस्यां संस्कृतौ इमान्येव शास्त्राणि प्राधान्येनाचार्यैः प्रतिपादितानि शास्त्रप्रबन्धैश्च दृढ़ीकृतानि।

अस्तु, प्रथमं शिल्पानि संकीर्त्यन्ताम्। शिल्पानां बहवो भेदाः सन्ति। वात्स्यायनकामशास्त्रे चतुष्षष्टिकलात्मकानि यानि शिल्पानि स्वीकृतानि तान्यत्र संक्षेपेण संकीर्तनीयानि तथाहि, :—

१. गीतम् २. वाद्यम् ३. नृत्यम् ४. आलेख्यम् ५. विशेषकच्छेद्यम् ६. तण्डुलकुसुमवलिविकाराः ७. पुष्पास्तरणम् ८. दशनवासनांगरागः ९. मणिभूमिकाकर्म १०. शयनरचनम् ११. उदकवाद्यम् १२. उदकाघातः

१३. चित्रयोगाः १४. माल्यग्रथने विकल्पाः १५. शेखरकापीडयोजनम् १६. नेपथ्यप्रयोगाः १७. कर्णपत्रभङ्गाः १८. गन्ध-युक्तिः १९. भूषण-योजनम् २०. ऐन्द्रजालयोगाः २१. कौचुमारयोगाः २२. हस्तलाघवम् २३. विचित्रशाकयूषभक्ष्यविकारक्रियापानकरसरागासवयोजनम् २४. सूचीवायकर्माणि २५. सूत्रक्रीडा २६. वीणाडमरुकवाद्यानि २७. प्रहेलिका २८. प्रतिमाला २९. देवार्चकयोगाः ३०. पुस्तकवाचनम् ३१. नाटकाख्यायिकादर्शनम् ३२. काव्यसमस्यापूरणम् ३३. पट्टिकावेत्रवानविकल्पाः ३४. तर्ककर्माणि ३५. तक्षणम् ३६. वास्तुविद्या ३७. रूप्यरत्नपरीक्षा ३८. धातुवादः ३९. मणिरागाकरज्ञानम् ४. वृक्षायुर्वेदयोगाः ४१. मेषकुक्कुटलावकयुद्धविधिः ४२. शुकसारिकाप्रलापनम् ४३. उत्सादनसंवाहनकेशमर्दनकौशलम् ४४. अक्षरमुष्टिकाकथनम् ४५. म्लेच्छितविकल्पाः ४६. देशभाषाविज्ञानम् ४७. पुष्पशकटिका ४८. निमित्तज्ञानम् ४९. यन्त्रमातृका ५०. धारणमातृका ५१. संपाद्यम् ५२. मानसी ५३. काव्यक्रिया ५४. अभिधानकोषः ५५. छन्दोज्ञानम् ५६. क्रियाकल्पः ५७. छलितकयोगाः ५८. वस्त्रगोपनानि ५९. द्यूतविशेषाः ६०. अक्षक्रीडा ६१. बालक्रीडनकानि ६२. वैनायिकीनां विद्यानां ज्ञानम् ६३. वैजयिकीनां विद्यानां ज्ञानम् ६४. व्यायामिकीनां विद्यानां ज्ञानम् ।

चतुष्षष्टिकलानामेष संवादः न केवलं लोकायतिकदर्शनद्दष्टिप्रवरेषु कामशास्त्रेषु श्रूयते। धार्मिकेषु ब्राह्मणबौद्धजैनग्रन्थेष्वपि भूयान् मुनिवंशस्सन्दृश्यते। तथाहि श्रीमद्भागवतटीका कृता श्रीधरेणाथ जीवगोस्वामिना चाप्येवं विवृतम्। विष्णुपुराणे तथा हरिवंशे, बौद्धानां ललितविस्तरे, जैनानामुत्तरास्त्राध्ययनसूत्रे, तथा च कल्पसूत्रे तथैव समर्थनम्। लौकिकसंस्कृतकाव्यग्रन्थेष्वपि यत्र तत्र सर्वत्रैवायं प्रसारस्तथाहि—दशकुमारचरिते, कादम्बर्यां, क्षेमेन्द्रस्य कलाविलासे, समवायसूत्रे विदर्भराजस्य रामचन्द्रकृतटीकायां ललितासहस्रनाम्नां नारायणकृतटीकायां तथा च भास्कररायटीकायां शिल्पानां सुदीर्घा नामावली द्रष्टव्या।

अलं विस्तरेण । अमीषु शिल्पेष्वेव वास्तुविद्या, तक्षणं, प्रतिमालं, यन्त्रमातृका, आलेख्यं चेति वास्तुशास्त्रस्य प्रवरा विषया विराजमानाः कालक्रमेण जनानुरागाद्वा, प्रचुरप्रचाराद्वा अनल्पोपयोगाद्वाद्यापि सन्तिष्ठन्ते । अपरे च साम्प्रतं नाम्नैव श्रूयन्ते ग्रन्थेष्वेव पठ्यन्ते अथवा विलासिषु विलासिनीषु वा यासु कासुचिद् शरण्या स्वप्यन्ते ।

वास्तुशास्त्रं स्थापत्यशास्त्रं वा विद्यास्थानेषु न गणितमिति न विभावनीयम् । शास्त्रस्यास्य प्रसिद्धानां विद्यास्थानानां मध्ये विद्याद्वयेन सार्कं घनिष्ठससम्बन्धः । ज्यौतिषे प्रकृष्टं वास्तु-विज्ञानं दृश्यते कल्पेच ततोऽपि प्रवृद्धं दर्शनं दीप्यते । शुल्वसूत्रेषु वेदिरचना-विज्ञानं यद् पल्लवितं तदेव प्रासादस्थापत्यस्य जनकं कथ्यते । अथ च पूर्वमेवेदं प्रतिपादितं स्थापत्यवेदः अथर्ववेदस्योपवेद. । अन्यच्च पुराणेषु तंत्रेषु ये वास्तुशास्त्राचार्याः वास्तुशास्त्रप्रवर्तकाः वा परिगण्यन्ते तेषु बहवः वैदिका ऋषयः पुरातनाश्च शास्त्रप्रणेतारः । अतश्शास्त्रस्यास्य पुरातनत्वनार्षत्वं च नैव विचिकित्सनीयम् । तथाहि पुराणप्रसिद्धा वास्तुशास्त्रोपदेशकाः -

**भृगुरत्रिर्वशिष्ठश्च विश्वकर्मा मयस्तथा**
**नारदो नग्नजिच्चैव विशालाक्षः पुरन्दरः ।**
**ब्रह्मा कुमारो नन्दीशः शौनको गर्ग एव च**
**वासुदेवोऽनिरुद्धश्च तथा शुक्रबृहस्पती ।।**
**अष्टादशैते विख्याताः शिल्पशास्त्रोपदेशकाः।**

तान्त्रिकाणां कृते एतद्विभावनीयं भवति–आगमापरनामानि तन्त्राणि शैव-शाक्त-वैष्णवभेदात् त्रिधा भिद्यन्ते । शैवागमाः कापाल-कालमुख-पाशुपत-शैव-भेदेन चतुर्धा भवन्ति । तत्रापि चरमे काश्मीरशैवसिद्धान्त-भेदेन द्विधा भिद्यन्ते । शाक्तागमाः दक्षिणाचारवामाचार-भेदेन द्विविधा भवन्ति । दक्षिणाचारः प्रायो वैदिकमार्गानुसारी । वामाचारस्तु वैदिक-

मार्ग-परिभ्रष्ट इति वदन्ति। वैष्णवागमाश्च वैखानस-पांचरात्र-भेदेन द्विविधा भवन्ति। उभये अपीमे विष्णुपारम्यं विष्णुपूजादिकं च प्राधान्येन प्रतिपादयन्ति।

वैखानस-पांचरात्रयोस्तारतम्यं वैखानसप्रक्रियायां वैखानससूत्रिणां द्विजानामेवाधिकारः। भगवान् वैखानसो हि आपस्तम्ब-बौधायनादिवत् यजुःशाखानुसारी श्रौत-गृह्य-धर्म-सूत्राणां रचयिता। तदीयसूत्रेषु भगवतो नारायणस्य पूजां संग्रहेण प्रतिपादितामवलम्ब्य भृगुमरीच्यादयो महर्षयो विस्तरेण भगवत्पूजां प्रतिपिपादयिषवो विविधानागमग्रन्थानरचयन्। ते च भृगु-संहिता, मरीचिपटलः, आनन्दसंहितेत्यादिनाम्ना प्रथन्ते। पांचरात्र-संहितायान्तु स्वार्थे गृहाचार्यजने सर्वेषामधिकारः। परार्थे देवालय-यजने तु ये किल प्रसिद्धेषु देवालयेषु वंशपरम्परया दीक्षाविशेषपुरस्सरे समा-राधनेऽधिकृताः, तद्वंशजानामेव मुख्याधिकारः अन्येषां तु गौणोऽधिकार इति संप्रदायः। पांचरात्रसंहितासंख्यापरिगणनम् एतच्छास्त्रसम्बन्धिनः संहिता-भेदाश्च पाद्ममार्कण्डेयकापिञ्जलभारद्वाजहयशीर्षसंहिता विष्णु-तन्त्रादिषु बहुधा नामतो निर्दिश्यन्ते। ततः संगृह्य तन्नामानि हयशीर्ष-पांचरात्रे तदनुगामिनि अग्निपुराणे विभावनीयानीति दिक्।

वास्तुशास्त्रस्य को विस्तारः केच तस्य विषयाः किं स्थापत्यं किं च स्थपतिलक्षणम् काश्च स्थपतिकोट्य कश्चोपोद्घातः शास्त्रस्य कश्च पन्थाः का च सरणिः किं च तत्र वैचक्षण्यं भवनरचनायां नगर-रचनायां वा प्रासाद-निवेशे प्रतिमाप्रकल्पने वा आलेख्यकर्मणि यन्त्रनिर्माणे वेति सर्वं वैदुष्यकलानैपुण्यंच वास्तुशास्त्रीय-ग्रन्थाना परिशीलनेन विज्ञायते। अस्मा-कमेतन्महद्गौरवं यदहं पारिभाषिके वैज्ञानिके चास्मिन् शास्त्रे अनुसन्धा-नार्थी प्रवृत्तः। शास्त्रमिदमतिकठिनम्। न कुत्रापि प्राचीनानि प्रस्थानानि न कोऽपि प्राचीनः एतद्विषयकवास्तुकोषः न कापि परम्परागता सरणिः शापदुर्विदग्धानां विश्वकर्मीयाणां घोरागतिरेवात्र। किं निदानं यद्वास्तु-वैदुष्यं विलुप्तम्। तथाप्यग्रगामिनां रामराजप्रसन्नकुमाराचार्य-द्वय-वास्तु-

शास्त्र-शोधकैर्यः पूर्वपन्थाः प्रवर्तितस्तेनास्माकं सोत्साहमत्र विषये प्रवृत्तिर्बभूव । संमरांगण-सूत्रधार-वास्तुशास्त्रस्याध्ययनेन प्रथमं ग्रन्थस्यैकस्य गरिमाणं पुनश्चास्य शास्त्रस्य प्रायः समेषामेव ग्रन्थानां महिमानं पुराणागमतन्त्रप्रतिष्ठा-पद्धतीनां नानाग्रन्थानां प्रथिमानं च दर्शं दर्शम् उदरंभरिः ब्राह्मण इव अशेषशास्त्रालोडनकृतमतिः वास्तुशास्त्रानुसन्धाने प्रवृत्तः अभवम् । तदधिकृत्याहं ब्रवीमि —

**अप्रज्ञेयं दुरालोकं गूढार्थं बहुविस्तरम् ।**
**प्रज्ञापोतं समारुह्य प्राज्ञो वास्तुनिधिं तरेत् ।।**

इति वचनानुसारेण प्रज्ञापोतं विनैव भगवत्याः सर्वमंगलायाः कृपाकणेनैव किमपि कर्तुं पारये ।

प्रकृतमनुसरामः यद्यपि मानसारमयमत-शिल्परत्नादीनां द्राविडानां विश्वकर्म वा वास्तुशास्त्रसमारांग-वास्तुशास्त्रापराजितपृच्छादीनां च नागराणां वा शास्त्रीय-ग्रन्थानां संग्रहाध्यायेषु प्रश्नं पृच्छां वाधिकृत्योपकल्पितेष्वध्यायेषु वास्तुशास्त्रस्य ये विषयाः तत्र तत्र संकेतिताः तेषामस्ति सुदीर्घसूची । सा च मदीयवास्तुशास्त्रीय-ग्रन्थेषु विशेषतश्च वास्तुलक्षणे द्रष्टव्यास्ति । तथापि प्रस्तूयते यदमीषां बहूनां विषयाणां अष्टैव प्रधानाः विषयाः :—

१. प्रारम्भिकाः मौलिकाधाराश्च । २. पुरनिवेशः नगररचना वा ३. चातुर्वर्ण्याधिवासः जन-भवननिवेशो वा । ४. राजवेशः नृपतेर्वेश्म राजालयो वा । ५. प्रासाद-कर्म देवावासा वा । ६. प्रतिमा-प्रकल्पनम् तक्षणं वा । ७. चित्रकर्म । ८. यन्त्रविधानं शयनासनं च ।

इदं स्थापत्यमष्टाङ्गं प्रस्तावितं मया । तदधिकृत्यायं मदीय एष उन्मेषः आधुनिकवैज्ञानिकदृशा अधिकसुसंगतः समीचीनोऽपि ।

अन्यथा समरांगणदृशा त्वष्टांगमिदं भवति—

प्रोक्तं चतुर्धा स्थापत्यं वास्तुतत्त्वस्य सिद्धये ।
ब्रूमस्तदेव चेदानीमङ्गैः संयुक्तमष्टभिः ।।
तेष्वङ्गं प्रथमे प्रोक्तं वास्तुपुंसो विकल्पना ।
पुरस्य विनिवेशस्तु द्वितीयं द्वारकर्म च ।।
रथ्या-विभागप्राकारनिवशोऽट्टालकस्य च ।
विनिवेशः प्रतोलीनां विभागास्थानकानि च ।।
प्रासादश्च तृतीयं स्याच्चतुर्थं तु ध्वजोच्छ्रितिः ।
पंचमं नृपतेर्वेश्म स्थानान्तरविभक्ति च ।।
चार्तुवर्ण्य-विभागश्च गृहभागश्च षाष्ठकम् ।
सप्तमं यजमानस्य शालायां मानमीरितम् ।।
यज्ञवेदीप्रमाणं च कोटिहोमविधिस्तथा ।
अष्टमं राजशिविर-निवेशो दुर्गकर्म च ।।
यो वेदाङ्गान्यमून्यष्टौ सोऽत्र स्थपतिसत्तमः ।

टि०-चतुर्धा स्थापत्यमित्यनेन स्थपति-लक्षणं परामृश्यते तथाहि :—

शास्त्रं कर्म तथा प्रज्ञा शीलं च क्रिययान्वितम् ।
लक्ष्यलक्षणयुक्तार्थशास्त्रनिष्ठो नरो भवेत् ।।

टि०—शिल्पं तक्षणं वा यन्त्रकर्मविधिश्च नोपलभ्यते समरांगणीये स्थापत्यांगाष्टकेऽस्मिन् ते स्थपतिक्षणे द्रष्टव्ये तथाहि—

सामुद्रं गणितं चैव ज्यौतिषं छन्द एव च
सिराज्ञानं तथा शिल्पयन्त्रकर्मविधिस्तथा
एतान्यंगानि जानीयाद् वास्तुशास्त्रस्य बुद्धिमान् ।

अस्तु नवीनमष्टांगमिदमधिकृत्य संक्षेपेण ब्रवीमि । प्रारम्भिकेषु भूमिसंग्रह एव मौलिमालायमानः यत्राधुनिक इंजीनियरिंग विद्या सर्वेयिंगकला वा पतति । भूमिसंग्रहो न केवलं वास्तुभूमिचयनं भूमेश्च नानावर्गीयोपचारैः परीक्षणमेवाभिपरामृश्यते । शोधनकर्षण-दिङ्न्यास-पदविन्यास प्रभृतिभिर्बहुभि. प्रारम्भिकैः कृत्यैरस्माकं जन-पदादीनां कीदृशी स्थितिः किञ्च तत्र शाकं किञ्च फलं कीदृशं दारु कीदृशो वनस्पतिः कोऽनुक्रमः जीवानां च कीदृग् सलिलं कीदृशाश्च सलिलाशयाः किञ्च विहगवृन्दं किञ्च रामणीयकं कीदृशश्च प्रदेशः पर्वताकीर्णो वा वनाकीर्णो वा तत्र शीतत्वमस्ति उष्णत्वं वा वर्तते इति नाना विचाराः सन्ति ।

मौलिकाधारेषु गृहनिर्माणमूलस्तम्भा इव मया वास्तुशास्त्रस्य पञ्च मौलिकाधारास्स्वीकृताः । तथाहि :—

१. शंकुस्थापनं दिङ्निर्णयो वा यः Orientation इति नाम्नाद्यतने युगे कीर्त्यते ।

२. आयादि-षड्-वर्गा ये Six canons & Hindu Architectur इति संकीर्तनेन साम्प्रतं बोध्यन्ते ।

३. वास्तुपुरुषमण्डलं पदविन्यासो वा यश्चाधुनिकभाषायां साइट प्लानिंग इति बोद्धव्यः ।

४. मा॰ं हस्तलक्षणं वा । मानं विना न कापि रचना संपद्यते ।

५. पताकादि षट्छन्दांसि यानि The Prospect and the Aspect of the Building.

अद्यत्वे वास्तुकलासिद्धान्ते गतार्थनीयानि भवन्ति ।

अमीषां समेषामेव मौलिकाधाराणां सविस्तरं व्याख्यानं कृतमस्ति निजेषु ग्रन्थेषु तत्तत्रैव द्रष्टव्यमस्ति नात्र विस्तार्यते स्थानाभावात् ।

पुरनिवेशे नगर-रचनां, ग्राम-रचनां वाधिकृत्य बहवः उपविषयाः उपजीव्यास्सन्ति । तथाहि—पदविन्यासः, रथ्या-विभागः, प्राकारादिनिवेशः प्रतोलीविन्यासः आगारादिपुरजनविहाराणां वापीकूपादि-सलिलाशयानां

निवेशाः चातुर्वर्ण्याधिवासश्च बहवः, निवेशास्समारभ्यन्ते । पुनश्च कति-प्रकारं नगरं का च विधा ग्रामाणां राजधानी-नगरस्य कुत्र निवेशः, वाणिज्यप्रवरस्य पत्तनस्य कुत्र विन्यासः शाखानगराणां च कुत्र स्थापनं खेटस्य ग्रामस्य वा कुत्रोपनिवेशः । कति प्रकारं दुर्गं कुत्र च दुर्गाणि स्थापनीयानि इति-सर्वम् सम्यक् विस्तार्यते तत्र तत्र मयमतादिशिल्पेषु प्राचीनाना पुरनिवेशपद्धतेः किं किं साम्प्रतिकराष्ट्रीयनियोजने स्वीकरणीयमित्यपि मया यथामति विचारितम् ।

गृहारम्भविज्ञाने भवन-निवेशे चापि बहूनि प्राथमिकानि भूयांसि च कर्माणि आपतन्ति । प्रायेणेदं कथ्यते यत् भारतीयैर्जन-भवन-विन्यास वास्तु-कलायां न कोऽपि प्रकृष्टः पन्थाः प्रवर्तितः । भारतीयानां वास्तु-वैभवं प्रासादरचनायामेव बद्धमिति भ्रान्तमेव धारणम् । अस्माकं वास्तु-शास्त्रे विशेषतश्च समरांगणसूत्रधारवास्तुशास्त्रेऽयमपूर्वो विलासः यजन-भवनं राजभवनं देवभवनं च (देवप्रासादाः) पृथक् पृथक् विवृतानि सन्तीति कृत्वा या सरणिः जनभवनानां स्वीकृता सातीव सरला स्वल्पैर्द्रव्यैस्स-म्पाद्या । जन-भवनानि शालभवनानि शालानि शालभवनानीत्यत्र चैकशालं, द्विशालं, त्रिशालं, चतुश्शालं, पंचशालं, षट्शालं, सप्तशालम्, अष्टशालं, नवशालं, दशशालं च भवन्ति । शाल-भवनेषु षड्दारूक-विन्या-सप्राधान्येन भूषालिन्दवीथी-प्राग्रीवादि-प्रचुर-विन्यास-वैभवेन च तेषा-मुष्णप्रधानेऽस्मिन् देशे वैज्ञानिक उपयोगः । "शिलाकुड्यं शिलास्तम्भं नरावासे न योजयेत्" इति आगमानां पुराणानां चातिदेश इति कृत्वा शाल-भवनानि छाद्यमयानि । छाद्यानामनेका विधा । छाद्यप्रवरेषु शाल-भवनेषु भारतीयाः निवाससुखमनुभवन्ति स्म । इदानीं तरुजच्छाद्यस्थाने यत्पाषाणमयं छाद्यं दीयते तन्न वैज्ञानिकं न चापि देशस्यास्य कृते स्वास्थ्यकरमिति विस्तरेण मया निजेषु ग्रन्थेषु प्रतिपादितमस्ति । भार-तीयानां भवनद्रव्य-विधिविशेषतश्च वनाद् दारु-आहरणविधिः अति-प्रकृष्ट आसीत् । द्रव्यसंग्रहणकालः वृक्षशिल्पिकार्य-प्राशस्त्यं, वृक्षच्छेदन-

विधिवृक्षवयोनिर्धारणं, वृक्षमण्डल-ज्ञान-प्रभृतयः बहवः वैज्ञानिकविषयाः। तथैव भवनरचनायां चेयविधिः कियन्तश्च चयगुणाः सर्वमेवास्ति पारिभाषिकं विज्ञानम् ।

द्वारकर्माप्यतीवदृढं विज्ञानम् । द्वारवेधस्तु भारतीयभवनविन्यासे सर्वथा परित्याज्यः । इत्थमस्ति बहुभवनकलाविन्यासविजृम्भणं नैतत्सर्वमत्र प्रतिपादयितुं शक्नोमि ।

राजभवनविन्यासे कापि विलक्षणा परम्परासीत् या न केवलं शिल्पशास्त्रेषु एव निबद्धा किन्तु रामायण-महाभारतादिप्राचीनैतिह्येषु प्रायस्सर्वकाव्यनाटकादिलौकिक-ग्रन्थेष्वपि तथैव परिपुष्टा प्रत्यक्षीक्रियते । विशिष्टा राज-भवन-रचना यत्र वितानानि लुनाश्च (वितानेषु पुष्पालंकरणानि) दृष्ट्वाद्ययुगीनाः कला-विशारदा पारसीककलाऽनुकरणं कथयन्ति, नैतत् समीचीनं यतो हि अस्माकं शिल्पेषु इदं सर्वरचनावैभवं सम्यक् प्रतिपादितमस्ति । राजभवनान्येव साहित्यसंगीतकलानामासीदाश्रयः इति कृत्वा बहूनामुपभवनानां संगीत-नाट्यपुस्तकचित्र-प्रभृतीनां तत्रैव निवेशाः आवश्यकाः बभूवुः । सभा, न्यायशाला आयुधशाला कोषागारगज-शालाश्वशालादीनामपि बहुविजृम्भणम् । अन्यच्च राजभवन-निवेशे विविधानां यन्त्राणां निर्माणमपि आपतति । यतोहि दासयन्त्र-योधयन्त्रद्वारपालयन्त्रविनोदयन्त्राणान्तु वैलक्षण्यं समरांगणवास्तु शास्त्रे प्रथितं दृश्यते । प्रवर्षणप्रणालादिधारागृहयन्त्राणां वसन्तमदनविवासादीनां दोला गृहय न्त्राणां चापि भूयानभिनिवेशस्तत्रैव दृश्यते । अतः यन्त्रमधिकृत्य तत्र वैज्ञानिकं प्रवचनं प्रस्तूयते । तथाहि—यन्त्रबीजाः, यन्त्रकोट्यः, यन्त्रकर्माणि, यन्त्रगुणाः यन्त्राणां विधा यन्त्रेषु विनोद-धारा-दोलायन्त्रैस्साकं विमान-यन्त्रं वारियन्त्रं संग्रामयन्त्रं चेति बहवो भेदा उपवर्णितास्सन्ति । शयनासनरचनापि प्रकृष्टासीत् तत्र च साधारणभवनमधिकृत्य राजभवनं वाधिकृत्य भवनोपयोगिनां नानावर्गीयाणां शयनासनमञ्जूषाप्रभृतीनां भवनसज्जानां वर्णनमस्ति । इदानीं यावत् वास्तुशास्त्रस्य स्वनिर्णीतिषु

अष्टाङ्गेषु केवलं पंचानामतीव साधारणोपन्यासः मया विहितः। शेषानधिकृत्यापि किमपि कथनीयमस्ति।

## प्रासाद-स्थापत्यम्

प्रासाद-निर्माणं भारतीय-स्थापत्ये मौलिमालायमानम्। प्रासादोत्पत्तौ साम्प्रतिकाः स्थापत्यकलाकोविदाः स्थापत्यमधिकृत्य कुशला ग्रन्थकर्तारः लेखकाश्च ये येऽवकूताः समालोचिताः ते सर्वे भ्रान्ताः यतो हि शिल्पशास्त्रेषु प्रासादोत्पत्तौ प्रासादप्रभृतौ ये येऽवकूताः सिद्धांतीकृताः तेत्वस्माकं कृतेऽवधारणीयाः। प्रासादं पुरुषं मत्वैव वास्तुशास्त्राचार्याः प्रासादं पुरुषमधिकृत्य प्रासाद-शिल्पे प्रासाद-निर्माणे च प्रसादाङ्गानां पुरुषाङ्गोपाङ्गप्रत्यङ्गैस्साकं समवधारणीकृतवन्तस्सर्वत्रैव इमामेव सिद्धान्तधियं निवेशयन्तो विलोक्यन्ते विशेषतश्च पुराणेषु तन्त्रेषु च। तथाहि भवन्तो विपश्चितः उद्धरणानीमान्यास्वादयन्तु भोः।

**प्रासादं वासुदेवस्य मूर्तिभेदं निबोध मे।**
**धारणाद्धारणीं विद्धि आकाशं शुषिरात्मकम्॥**
**तेजस्तत् पावकं विद्धि वायुं स्पर्शगतं तथा।**
**पाषाणादिष्वेव जलं पार्थिवं पृथिवीगुणम्॥**
**प्रतिशब्दोद्भवं शब्दं स्पर्शः स्यात् कर्कशादिकम्।**
**शुक्लादिकं भवेद्रूपं रसमन्नादिदर्शनम्॥**
**धूपादिगन्धं गन्धन्तु वाग्भेर्य्यादिषु संस्थिता।**
**शुकनासाश्रिता नासा बाहू तद्रथकौ स्मृतौ॥**
**शिरस्त्वण्डं निगदितं कलसं मूर्द्धजं स्मृतम्।**
**कण्ठं कण्ठमिति ज्ञेयं स्कन्धं, वेदी निगद्यते॥**

पायूपस्थे प्रणाले तु त्वक् सुधा परिकीर्तिता ।
मुखं द्वारं भवेदस्य प्रतिमा जीव उच्यते ॥
तच्छक्ति पिण्डिकां विद्धि प्रकृतिं च तदाकृतिम् ।
निश्चलत्वं च गर्भोऽस्या अधिष्ठाता तु केशवः ॥
एवमेष हरिः साक्षात् प्रासादत्वेन संस्थितः ।
जङ्घा त्वस्य शिवो ज्ञेयः स्कन्धो धाता व्यवस्थितः ॥
उर्ध्वभागे स्थितो विष्णुरेवं तस्य स्थितस्य हि ।

—अग्निपुराणात्

सर्वतत्त्वमयी यस्मात् प्रासादो भास्करी तनुः ।
तद् यथावस्थितं सर्वं कथयामि निबोधत ।
पायूपस्थौ प्रणालौ द्वौ नेत्रे ज्ञेये गवाक्षकौ ।
सुधा भुग्न(?)पिनी ज्ञेया स(ब)क्षो मंजरिकोद्गतः॥
जङ्घा जङ्घा तु विज्ञेया बरण्डी वसना मता ।
शुगाग्रा तु भवेन्नासा सूत्रारिरा विशेषतः ॥
गर्भः स्थिरत्वं विज्ञेयो मुखं द्वारं प्रकीर्तितम् ।
कपाटौष्ठपुटौ ज्ञेयौ प्रतिमा जीवमुच्यते ॥
स्कन्धस्तु वेदी गदिता कण्ठं कण्ठमिहोच्यते ।
शिरोभालास्थितं ज्ञेयं......चून – संस्थितम् ॥
एवमेष रविः साक्षात् प्रासादस्थेन संस्थितः ।
जगती पिण्डका ज्ञेया प्रासादो भास्करः स्मृतः ॥

—हयशीर्षपञ्चरात्रात्

"प्रासादं पुरुषं मत्वा पूजयेन्मन्त्रवित्तमः।"
"प्रपदं पादकं विद्याच्छिखा स्तूपीति कथ्यते।"
लोहकीलकपल्लादि — सर्वदन्तनखादिकम् ॥
सुधा शुल्कं त्विष्टकौधमस्थि मज्जा च पोतरुक् ।
मेदः श्यामरुचिस्तद्वद् रक्तं रक्तरुचिस्तथा ॥
मांसं मे चक्रवर्णं स्याच्चर्म नीलं न संशयः ।
त्वक् कृष्णवर्णमित्याह प्रासादे सप्तधातवः ॥

—शिल्परत्नात्

प्रासादस्थापत्यस्याल्पीयसीमिमां भूमिकां प्रति किमपि कथयित्वा साम्प्रतं वास्तु-व्रत-दर्शनं प्रति श्रीमतामवधानं दीयमानमभ्यर्थये। यतो हि सर्वाणि शास्त्राणि सर्वाश्च कलाः दर्शनदृष्ट्या दीप्तास्संदृश्यन्ते। संगीते नादबलम् साहित्ये रसब्रह्म। व्याकरणे शब्द-ब्रह्म स्फोटब्रह्म वा तथैव शिल्पे वास्तु-ब्रह्म जेगीयते। इदं दर्शनं प्रासादस्थापत्ये प्रत्यङ्गं दरीदृश्यते।

भारतीये स्थापत्ये वास्तु-पुरुष-विकल्पना स्थापत्यस्य प्रथमं कौशलमिदं मया पूर्वमेव संकेतितम्। वास्तु-पुरुष एव वास्तु-ब्रह्मणि प्रत्यवसीयते। इदं सर्वं मया निजे Vastusastra Vol I नाम्नि ग्रन्थे सातिशयं साभिनिवेशं व्याख्यातमस्ति अतः तत्रैव विस्तरेण श्रीमन्तः परिशीलयन्तु।

प्रासाद-शब्दः यद्यपि अमरकोषदिशा "प्रासादो देवभूभुजामिति" कृत्वा प्रासादः राज-भवनानां देवभवनानां च कृते समदृष्ट्या विभाव्यते परं शिल्प-शास्त्रदिशा प्रासाद-शब्दः केवलं देव-भवनायैव चरितार्थ्यते। प्रासादशब्दस्य व्युत्पत्तिरपि इममेव सीमितम् अर्थं द्योतयति प्रकर्षेण सदनम् सादनम् इति प्रासादः। सदनं तावद् चितेर्विशेषः। वैदिकचितिरेव प्रासादस्य जननी। वैदिक इष्टौ यः संस्थेव सर्वोत्कर्षेण विराजते स्म। पुराणे पूर्ने देवागारनिर्माणमेव सर्वातिशयमुत्कर्षं भजते स्म। अयमेव

पूर्व-धर्मः अस्माकं संस्कृतौ प्रासादनिर्माणसंस्था सर्वेषां कृते धनिनां राज्ञो श्रेष्ठिनां भिक्षुकाणां धर्माचार्याणां परिव्राजकाणां समेषामेव कृते मूर्धन्यं कर्म बभूव । अतएव सर्वत्रैवास्मिन् देशे दक्षिणापथे उत्तरापथे, मध्यदेशे, द्राविडेषु वङ्गेषु कलिङ्गेषु सर्वत्रैव देवागाराणि प्रतिपत्तनं प्रतिपुरम् प्रतिग्रामं प्रतिपर्वतं देशे-देशे दृश्यन्ते । अयमेव पौराणिकपूर्त-धर्म-विलासः भारतस्य विकासः संस्कृतेश्च समुल्लासः एकतायाश्च मूर्धन्यतमोपायः ।

## प्रतिमा-स्थापत्यम्

अथ प्रतिमा-स्थापत्यमपि किमपि प्रतिपादनीयम् । प्रतिमास्थापत्यं प्रतिमा-कला देशस्यास्य विशदा, वरिष्ठा गरिष्ठा, सर्वश्रेष्ठा, च कला वर्तते । प्रतिमा-पूजैव स्थापत्यस्य जननी । अज्ञानां भावनया प्रतिमा परिकल्पिता, इयमुक्तिर्नैव समीचीना । षड्दर्शनीसमारोहे विचरतां दार्शनिकानां प्रज्ञावतां वेदान्तिनामपि कृते देव-पूजा तथैवासी-दुपजीव्या यथा तथाकथितानामज्ञानाम् । परमपरिव्राजकैः अद्वैतब्रह्म-दर्शनसंस्थापकैर्भगवत्पादैः शंकराचार्यैः देशस्यास्य चतुर्ष्वपि कोणेषु प्रासादाः संस्थापिताः । एतेन पूर्वाक्तं मदीयं स्थिरतां प्रयाति । यतो हि नाना उपासना-सम्प्रदायाः विकसिताः तथैव नाना प्रतिमावर्गा अपि समुद्भाविताः बभूवुः । अतएव ब्राह्मण-प्रतिमा-लक्षणमर्थात् त्रिमूर्ति-पंचमूर्ति-प्रभृतिनानाप्रतिमाः शास्त्रेषु स्थापत्येषु समुद्घाटिताः इतस्ततश्च दृष्टिपथे पथिकायन्ते । अयन्तावत् प्रथमो वर्गः । द्वितीयो वर्गः वैष्णव-प्रतिमा-लक्षणम् । वैष्णवप्रतिमा-लक्षणं दशावताराः चतुर्विंशति मूर्तयः आयुधपुरुषाः वासुदेवप्रभृति-असाधारणाः प्रतिमाः महता समारम्भेण आगमेषु, पुराणेषु, शिल्पग्रन्थेषु वर्णिताः स्थापत्येऽपि विलसन्तितराम् । तृतीयो वर्गः शैवप्रतिमा-लक्षणम् यत्र लिङ्गप्रतिमाः स्वरूपप्रतिमा द्वेधा वर्ग्यन्ते । चलाचलप्रभेदेन द्रव्यभेदेन फलप्रदर्शन-पुरस्सरं क्षणिक-लिंग-अचल-लिंगभेदेषु मानुषादिविविधा भेदा उपश्लोक्यन्ते । रूपप्रतिमा-प्रकल्पने शिल्परत्नेऽष्टादशभेदाः वर्णिताः । तथाहि—

**सुखासीनं तु प्रथमं स्कन्दोमासहितं ततः ।**
**तृतीयं चन्द्रमूर्धानं चतुर्थं वृषवाहनम् ।।**
**पंचमं नृपमूर्तिस्तु गंगाधरमतः परम् ।**
**सप्तमं त्रिपुरारिः स्यात् तथा कल्याणसुन्दरम् ।।**
**अर्धनारीश्वरं पश्चाद् दशमं गजहा तथा ।**
**एकादशं पाशुपतं कंकालं द्वादशं स्मृतम् ।।**
**अर्धनारायणं पश्चाद् भिक्षाटनमतः परम् ।**
**ततः कालारिमूर्तिश्च लिंगमष्टादशं स्मृतम् ।।**
**एवं लिंगोद्भवः पूर्वैः प्रोक्तः शैवपरायणैः ।**

भवन्तो विपश्चितः विदाङ्कुर्वन्तु यन्मया निजे Vastusatra Vol II ग्रन्थे Hindu Canons of Iconography & Painting. इति एकः नवीनः पन्थाः प्रतिमा-वर्गीकरण उद्भाविता नवनवोन्मेषाः संस्थापिताः । ते तत्रैव परिशीलनीयाः । तथाहि साधारणाः असाधारणाः अनुग्रहमूर्तयः विष्णवनुग्रहप्रभृतयः नृत्तमूर्तयः अष्टशत-विधाः याः भरतनाट्यशास्त्रमनुवर्त्य स्थापत्यानुकूलं प्रकल्पिताः, दक्षिणामूर्तयः ज्ञान-योग-व्याख्यान-वीणाधरादयः । उग्रमूर्तय संहारादयः अन्याश्च सर्वाः साकल्येन प्रतिपादिताः ।

चतुर्थ. वर्गः गाणपत्यप्रतिमालक्षणम् । यत्र गणपति--गणेशस्य सेनापतेः कार्तिकेयस्य नानारूपाणि प्रतिपादितानि स्थापत्येऽपि च संकाशन्ते । पंचमो वर्गः देवीप्रतिमालक्षणम्, यत्र शाक्तानां कृते बहु विजृम्भणं वर्तते । महाकाली-महालक्ष्मी-महासरस्वती-त्रिविधानां महादेवीनां नाना रूपाणि उद्भाव्यन्ते सर्वत्रैव निर्दिश्यन्ते च विशेषतः पाषाणेषु ताम्रेषु रजतेषु स्वर्णेषु अपि । षष्ठो वर्गः सौरप्रतिमा-लक्षणम् यत्र द्वादशादित्या सूर्यादयः

दिक्पालाः लोकपालाश्च उपवर्ण्यन्ते। सप्तमः वर्गः यत्र यक्षविद्याधर भक्त-मुनि वसु-मरुद्गण पितृगणादीनां प्रतिमा-लक्षणं प्रस्तूयते। अन्तिमश्च वर्गः ब्राह्मणेतरवर्गमुपजीव्यमानः सन्तिष्ठते यत्र जैनप्रतिमालक्षण बौद्धप्रतिमालक्षणं च साकल्येन संकीर्त्यते निदर्शनेषु चकास्ति।

आसु प्रतिमालक्षणमिदमल्पीयसा संकीर्तनेनैतद्विलोचनं नैव पारं प्रयातुं कामयते। यतोहि-प्रतिमा निर्माण-कौशलम् प्रति कोऽपि संकेतः अपेक्ष्यते। इदं तु प्रतिमा-विज्ञानं वर्तते। तथाहि—

१. प्रतिमा-निर्माणोपक्रमविधिः। २. प्रतिमा-प्रकाराणि·बिम्बभेदाः। ३. द्रव्यभेदेन बिम्बभेदाः-- प्रतिमा-द्रव्याणि तत्फलभेदाश्च। ४. प्रतिमा-मान-लक्षणम्। ५. प्रतिमानिर्माणे मानाधाराणां पंचपुरुष—स्त्रीलक्षणम्। ६. तालमानं तालनियमश्च। ७. मानभेदपूर्वकं प्रतिमा-विधानम् (प्रलम्बलक्षणमूर्ध्वासनार्चादयश्च)। ८. प्रतिमा-विधाने मधूच्छिष्ट-विधानम्। ९. प्रतिमा-विधाने दोषाः तत्फलं च। १०. प्रतिमारूपसंयोगः (अ) आसनानि। (ब) वाहनानि—हंसगरुडवृषभाः। (स) आयुधाः—षट्त्रिंशदायुधाः। (द) आभूषणानि – मौलि-लक्षणम्। भूषण-लक्षणम्। षोडशाभरणानां लक्षणम्। किरीटादिलक्षणम् (आभूषणानि वस्त्राणि च)। (य) प्रतिमा-मुद्राः- असंयुत-संयुत-नृत्त-हस्तप्रभेदैः ६४ हस्त-मुद्रा' वैष्णवादिषड्स्थानकमुद्राः। ऋज्वागतादिस्थानलक्षणम्। ११. प्रतिमा-निष्पत्तिः (नयनोन्मीलनम्)। १२. प्रतिमायां रसोन्मेषः। १३. प्रतिमा-प्रतिष्ठापनम्। इदं पूर्वसङ्केतिते ग्रन्थे साकल्येन वर्णितं वर्तते।

## चित्रस्थापत्यम्

अथ किमपि चित्रस्थापत्यं प्रति निगदनीयं भवति यतोहि स्थापत्ये मुख्यास्तावत् त्रयोऽङ्गाः वास्तु, शिल्पं, चित्रं चेति। चित्रं विना स्थापत्यं न मनोज्ञं भवति। प्रतिम-स्थापत्यं चित्रमेव। चित्र-शास्त्रं प्रतिमा-शास्त्रं अर्धनारीश्वरमिव दीप्यमानं विभाव्यते। शिल्परत्ने लिखितमेव एवं सर्वविमानानि गोपुरादीनि वास्तुनः।

**मनोहरतरं कुर्यान्नानाचित्रैः विचित्रितम् ॥**

विस्तरेणालम् । केवलं निजात् चित्रलक्षणात् विषयानुक्रमणी अत्र प्रस्तूयते यामधिकृत्य चित्र-शास्त्र-जिज्ञासवः भवन्तः तत्रैव परिशीलयन्तु—

१—चित्र-प्रशंसा २—चित्रोत्पत्तिः ३—चित्रं नृत्यं गीतञ्च ४-षडङ्ग-चित्रम् ५—चित्रप्रकाराः ६—चित्रोद्देश्यम् चित्रविषयाः वा ७—चित्राङ्गानि ८—भूमिबन्धनम् चित्रभित्तिर्वा ९—लेप्यकर्म १०—अण्डकवर्तनम् । ११—चित्रकर्मणि देवादीनां शरीरप्रमाणादि (अ) शरीरप्रमाणम् (ब) हंसादिपंचपुरुष-स्त्रीलक्षणम् (स) चित्रकर्मणि मूर्त्त्यवयवप्रमाणम (श) चित्रकर्मण्यङ्गप्रत्यङ्गमानेन स्त्रीणां निमार्णम् (र) तेनैव सामान्य-मानवर्णनम् (ल) चित्रकर्मणि देवतानेत्राद्यङ्गवर्णनम् १२—नानावर्णानुगताः शुभाकारविहाराः ऋज्वागतसाचीकृताद्यनेकभेदोपसहिताश्चित्रकर्मणो नवभेदाः। १३—चित्रं देवनृपर्षिगन्धर्वदैत्यदानवादीनां निर्माणम्। देशविशेषानुरूपासनशयनयानवेशसरित्सागरवाहनशैलशिखरसद्वीपभूमण्डलशंखपद्मनिधिचन्द्रनक्षत्ररात्रिसन्ध्यादिनिर्माणम् । १४—विलेखा-लक्षणम् । १५—वर्तिका। १६—चित्रलेखन-विधिः। १७—(अ) वर्तनाविधाः । (ब) पट्टपत्रवर्तनादिप्रकारश्च । १८—चित्रपत्रोत्पत्तिः । १९—कण्टकलक्षणम्। २०—चित्रकर्मणि वर्णभेदः–शुद्धवर्णमिश्रणादयश्च स्वर्णप्रयोगोऽपि। २१—चित्रेषु रसोन्मेषः—रस-चित्राणि । २२—चित्रदोषाः । २३—चित्रगुणाः । २४—चित्रकारः ।

अस्तु, वास्तु-शास्त्रीयग्रन्थेषु, चित्रशास्त्र-प्रतिपादकानां ग्रन्थानामतीव वैरल्यमस्ति । तेषु सर्वप्रख्याततमं पुराणे विष्णुधर्मोत्तरे चित्रसूत्रं तु सर्वे जानन्त्येव । नग्नजितः चित्रलक्षणं मूलरूपेण नोपलभ्यते वास्तु-शास्त्रीय-ग्रन्थेषु त्रयो ग्रन्था एव चित्रशास्त्रं प्रतिपादयन्ति समराङ्गणसूत्रधार-वास्तु-शास्त्रम् अपराजित-पृच्छा शिल्परत्नञ्च ।

मानसोल्लासपराभिधेयेऽभिलषितार्थचिन्तामणावपि आलेख्यकर्म सुदृढं निरूप्यते । अतः ग्रन्थपञ्चकमिदमालोड्य चित्रलक्षणमिदं संकलितम्, यश्च

विषय-विभागः प्रपञ्चितः, या च नवीना सरणिरासादिता, यश्च प्रबन्ध-प्रवाहः प्रवर्तितः तेन सर्वेणाशासे ग्रन्थोऽयम् मौलिक इव समुत्पत्स्यते।

प्रतिमा-लक्षण-चित्र-विषयकमिदमेकं स्वतन्त्रमेव कला-शास्त्र-पुस्तकं सम्पन्नम्। अस्य संकलनायां ये नवोन्मेषाः निर्दिष्टाः यः नवीन एव एकः प्रबन्धः उद्भावितः या चाभिनवैवैका-सरणिरासादिता तेन सर्वेणेदं-कथयितुं शक्नोमि ग्रन्थोऽयं शास्त्रस्यास्य विज्ञानां जिज्ञासूनां च छात्राणां समेषामेव प्रमोदं वितरिष्यते उपकारं चापि करिष्यते। तेन धन्यो मे परिश्रमो भविष्यति।

●

## कवेः प्रियता

●

ग्रामो नासौ न स जनपदः सास्ति नो राजधानी
तन्नारण्यं न तदुपवनं सा न सारस्वती भूः।
विद्वान्मूर्खः परिणतवया बालकः स्त्री पुमान्वा
यत्रोन्मीलतपुलकमखिला नास्य काव्यं पठन्ति।

—बिल्हणस्य

श्री लक्ष्मणनारायण शुक्लः

# अथ खानखानाकृतम्
# गङ्गाष्टकम्

हस्तलिपिबद्धान् ग्रन्थान् शोधयता मया 'भरतपुर' नगरादेका पुस्तिकोपलब्धा। आकारे लघ्वीयं पुस्तिका अशीतिवर्षपूर्व रामबक्सनाम्ना केनचिद् विप्रवर्येण लिखिता। अस्याः प्रथमे भागे पण्डितराजकृता गंगालहरी उत्तरार्द्धे च बिरामखांसूनुरहीमखानखाना विरचितं गंगाष्टकं लिखितमस्ति। अस्याष्टकस्य प्रथमस्तावत् 'श्लोकः' रहिमन--विलास, रहीम--कृतं संस्कृतकाव्यम्, Conlribulion of Muslims to Sanskrit Literature. इत्यादिषु ग्रन्थेषु दृष्टिगोचरो भवति, नेतराणि पद्यानि लभ्यन्ते विपश्चितामपश्चिमानां विदुषां कौतुकायात्र प्रस्तूयते तदष्टकम्। प्रतिलिपिकारकृताः बह्व्यः अशुद्धयः संशोधनमपेक्षन्ते।

## श्रीविरामखानसूनुरहीमखानखानाकृत (म्) गङ्गाष्टकम्

अच्युतचरणतरङ्गिणि मदनान्तकमौलिमालतीमाले।
त्वयि तनुवितरणसमये हरता देया न मे हरिता ॥१

चिरं विरंचिविष्णुपूज्यपादवारिधारिणे[1]।
प्रतापकेतुपट्टिकाम्बुयष्टिकाविहारिणी ॥
शशाङ्ककान्तिपूरकेण पापकूटकन्दिनी
जगत् त्रिदोषतस्तनुं पुनातु जह्नुनन्दनी[2] ॥२

---

१. णी, २. न्दि ( युक्तः पाठः )

शिवोत्तमाङ्गवेदिका - विहारसौख्यकारिणी ।
ततो भगीरथाङ्गसंङ्गमर्त्यंलोकचारिणी ॥
त्रिमार्गगा, त्रितापहा, त्रिलोकशोकखण्डिणी[1] ।
जगत् त्रिदोषतस्तनुं पुनातु जह्नुनन्दिनी ॥३

हिमाद्रिकन्दराविहारसिद्धचारणाङ्गना ।
सुगीतनृत्यतालभेदकामकेलिनन्दना ॥
सुकुञ्जपुञ्जवंञ्जुल प्रफल्लसूनुगन्धिनी[2] ।
जगत् त्रिदोषतस्तनुं पुनातु जह्नुनन्दिनी ॥४

सरस्वतीप्रपूरसूरकम्यकाम्बुसङ्गिनी ।
मुनीन्द्रवृन्दवन्दिता त्रिवेणिका तरङ्गिणी ॥
मुमुक्षुसङ्गसेविता सुतीर्थबुद्धिवन्दिनी ।
जगत् त्रिदोषतस्तनुं पुनातु जह्नुनन्दिनी ॥५

चकोरचक्रवाकहंसवृन्दकूलराजिता ।
मृणालखण्डधूमवायुपूतसत्त्वसंजिता ॥
शवाङ्गगन्धपूतहारि-वारि-राशि-सन्दिनी ।
जगत् त्रिदोषतस्तनुं पुनातु जह्नुनन्दिनी ॥६

रसालवेतसीतमालसालकुंजपावनी ।
मयूरकोकिलाप्रमत्ततीरशोभितावनी ॥
अनेकदेशकूलवातकालभीतिदण्डिनी ।
जगत् त्रिदोषतस्तनुं पुनातु जह्नुनन्दिनी ॥७

---

१, नी, २. फु ।

नरेन्द्रपुत्रमुक्तिदा सुरेन्द्रलोकसाधनम् ।
स्वसेवकाय दालिका सुतं सुमित्रकं धनम् ॥
नदीशपूरसङ्गमेन विश्वतापकन्दिनी ।
जगत् त्रिदोषतस्तनुं पुनातु जह्नुनन्दिनी ॥८

नवप्रवाहसंचलद्विलोलवीचिदोलितम् ।
श्वमीनकंकर्चितं श्रृगालकाकभक्षितम् ॥
नरं विलोक्य सादरं विकुण्ठलोकगामि[नं] [१]
वदन्ति देवि ? देवता भृशं त्वदीयविस्मयम् ॥९

विदेहि[२] देवि मे मतिं त्वदीय वारिसेवने ।
शुभेततरेकदा[३] प्रतीतिरस्तु मां[४] बुधे ॥
तवाम्बुपानमादरात् प्रकुप्यति[५] प्रतिक्षणं
त्वदीयवीचिमीक्षितः[६] प्रपातु[७] देवि मे दिनम् ॥१०

मुरारिपादसेविना विरामखानसूनुना ।
सुभाष्टकं[८] शुभं कृतं मया गुरुप्रभावतः ॥
पठेदिदं सदा शुचिः प्रभातकालतस्तु यः ।
लभेत वांछितं फलं स जाह्नवीप्रभावतः ॥

इति खानखानाकृतं गंगाष्टकं सम्पूर्णम् ।

---

१. नं, । २. धे, । ३. चिन्त्यपाठः । ४. या । ५. प्रकुर्वतः । ६. क्ष । ७. या । ८. शुभा ।

डॉ रामशङ्कर भट्टाचार्यः
व्याकरणाचार्यः, एम्०ए०, पीएच्०डी०

# पाणिनीयानि लाघव-करण-कौशलानि

शब्दव्यवहारे लाघवसम्पादनार्थं यानि कौशलानि पाणिनिनाऽवलम्बितानि, तान्यत्र समासतो व्याख्यास्यामः।

शब्दप्रयोगे लाघवकरणं खलु पाणिनेरेकं वैशिष्ट्यम्, अत एवाचार्यः '**लाघवसर्वस्वव्यसनी**' त्युच्यते। वक्ष्यमाणानि कौशलानि पाणिनिनैवोपज्ञातानि इति तु नास्माकमाग्रहः, परन्तु आचार्येणाभ्युपगतानीत्येव। प्राक्पाणिनीयान्यपि कानिचन कौशलानि स्युरित्यनुमीयते।

अत्रादाविदं विज्ञेयं यत् स्वरूपतो व्याकरणशास्त्रमपि लाघवार्थमेव प्रवृत्तम्। यथोक्तं नागेशचरणैर्मञ्जूषायाम्—"**तत्र प्रतिवाक्यं संकेतग्रहासम्भवात् तदन्वाख्यानस्य लघूपायेनाशक्यत्वाच्च कल्पनया पदानि प्रविभज्य पदे प्रकृतिप्रत्ययभागकल्पनेन कल्पिताभ्यामन्वयव्यतिरेकाभ्यां तत्तदर्थविभागं शास्त्रमात्रविषयं परिकल्पयन्ति स्माचार्याः**" इति। एतेन लाघवेन शब्दार्थज्ञानं व्याकरणमेव सम्पाद्यत इति स्पष्टम्। प्रतिपदपाठरूपो य उपाय इन्द्रादिकाले आसीत्, तेन शब्दार्थज्ञानं बहुकालसाध्यम् एवेति निश्चप्रचम्। अल्पकालेन अनेकशब्दार्थज्ञानं व्याकरणेनैव सुशकमिति वाग्योगविदां मतम्। स्वयं पतञ्जलिरपि—'लघ्वर्थं चाध्येयं व्याकरणम्' (पस्पशा)

इत्याह। एतेन व्याकरणशास्त्रप्रवृत्तिर्लघूपायेन शब्दार्थज्ञानं यथा स्यादित्येवमर्थमिति सिद्धम्[१]।

किञ्च व्याकरणे साधूनामेव शब्दानामन्वाख्यानं क्रियते, नासाधूनाम्—इयं रीतिरपि लाघवार्थमेव स्वीकृता इति पतञ्जलिना स्पष्टं प्रत्यपादि। शब्दशास्त्रं शब्दशास्त्रीया रीतिश्च लाघवमेव व्यक्तं निर्दिशतः—इत्यहो लाघवव्याकरणयोर्नेदिष्ठः सम्बन्धः।

सूत्रेण शब्दशास्त्रस्य रचनाऽपि लाघवाय। यदि श्लोकैः शास्त्ररचना स्यात्, तर्हि शब्दव्यवहारे गौरवं स्यादेव। किञ्च क्वचित् क्वचित् अस्थानेऽपि शब्दस्थापनस्य अवस्यकरणीयत्वात् (छन्दोरक्षणार्थम्) श्लोकरीतिर्दुष्टैव। नायं दोषः सूत्रपक्षेऽवतरति। किञ्च सूत्ररचनायां लाघवमपि करणीयमित्युपदिष्टमाचार्यैः।

अथ सोदाहरणानि कौशलानि दर्शयामः—

(क) सर्वेषु लाघवकरणकौशलेषु **'अनुवृत्तिपद्धतिः'** प्राधान्यं भजते। प्रायः सर्वेषां सूत्राणामर्थो दुर्घट एव स्यात्, यदि अनुवृत्तिबलेन सूत्रान्तरादपेक्षितपदानां बुद्ध्याऽवधारणं न स्यात्। तदेतत् स्पष्टमभिहितं वरदराजेन—**'सूत्रेष्वदृष्टं पदं सूत्रान्तरादनुवर्तनीयं सर्वत्र'** इति (लघुकौमुदी)। अनुवृत्तिमहिम्ना स्वल्पाक्षरसूत्राणि बह्वर्थगर्भाणि जायन्ते: यथा **'आद्गुणः'** ६।१।८७ इति सूत्रम् अनुवृत्तिमहिम्ना **'अवर्णाद् अचि पूर्वपरयोरेको गुण**

---

१—इदं निश्चितमेव यत् कोषादिभिः कृत्स्नं शब्दार्थज्ञानं न भवितुमर्हति। यतो हि शब्दानां विश्लेषणं कृत्वा व्याख्यानं क्रियते शब्दशास्त्रेण, अतस्तेन कृत्स्नशब्दार्थसम्बन्धविवरणं कर्त्तुं शक्यते। अत्रायं न्यायः—यथा पञ्चानामेव भूतानां ज्ञाने अधिगते भूतनिर्मितानामशेषाणां द्रव्याणां ज्ञानं सुकरं भवति, तथैव प्रकृति-प्रत्ययादिज्ञानेन शब्दार्थसम्बन्धसाम्राज्यमधिगतं भविष्यतीति।

**आदेशो भवति संहितायां विषये'** इत्यर्थकं भवति। अनुवृत्तपदानामवधि-निर्णय-विषये परम्परागतं व्याख्यानमेव शरणं भवतीति नार्थसाङ्कर्यं भवति।

(ख) प्रत्याहारकरणमपि लाघवार्थमेव। तच्च—**'प्रत्याह्रियन्ते संक्षिप्यन्ते वर्णा अस्मिन्'** इति निरुक्त्याऽपि प्रतीयते। वर्णविषये, प्रत्ययविषये च प्रत्याहारा रचिताः। लाघवमृते नैतस्याः पद्धतेः किमपि प्रयोजनमिति स्पष्टमेव।

(ग) निपातन-करणमपि लाघवार्थम्। येषां पदानां सिद्धये प्रकृति-विकारादिनिर्देशे कृते शब्दव्यवहारे गौरवमवश्यम्भावि, तादृशेषु स्थलेषु निपातनरीत्या पदं सिद्धं कृत्वैवाचार्येण सूत्रं रचितम्। तदेतल्लाघवार्थमेवेति मन्यामहे। किञ्च सूत्रसिद्धं पदं रूढमेव इत्यपि विज्ञापनार्थं निपातनं कृतम् इति निपातनरीतेर्लाघवकरणार्थत्वं व्यक्तं विज्ञायते। यथोक्तं **धातुसाधनकालानां प्राप्त्यर्थं नियमस्य च। अनुबन्धविकाराणां रूढ्यर्थं च निपातनम्''** ॥ इति।

(घ) तथैव गणपाठरचनाऽपि लाघवाय। येषु बहुसंख्यकेषु शब्देषु समानं कार्यं भवति, तेषां सर्वेषामुल्लेखे सति सूत्रशरीरे गौरवं भवत्येव, अतस्तेषु कमपि मुख्यं शब्दमादौ निर्दिशनि सूत्रकारः, आद्यादिशब्दैर्गण-पाठं च विज्ञापयति। प्राक्पाणिनीये शास्त्रे प्रायेण गणपाठस्य सत्ता नास्त्येव, अतः पाणिनेरिदमपरं वैशिष्ट्यमिति सामान्यतः प्रतीयते।

(ङ) अनुनासिकपाठोऽपि लाघवाय। अनुनासिकपाठमृते पृथक् शब्द-प्रयोगबलेन यदि इत्संज्ञकानां निर्देशः स्यात्, तर्हि शब्दव्यवहारे गौरवं स्यादेवेति निश्चितम्।

स्वरितपाठोऽपि तथैव। अधिकारगतिः यदि पृथक्शब्दबलेनाचार्येण विज्ञापनीया स्यात्, तर्हि शब्दबाहुल्यमवश्यम्भावि।

(च) णोपदेश-षोपदेशपाठावपि लाघवार्थावेवाचरितौ। तच्च भाष्यकृता

स्पष्टमेव व्याख्यातम् । **'अथ किमर्थं षकारमुद्दिश्य तस्य स आदेशः क्रियते न सकार एवोपदिश्येत ? लघ्वर्थमित्याह । कथम् ?अविशेषेणायं षकारमुपदिश्य सकारमादेशमुक्त्वा लघुनोपायेन षत्वं निर्वर्तयति – आदेशप्रत्यययोरिति । इतरथा हि येषां षत्वमिष्यते तेषां तत्र ग्रहणं कर्तव्यं स्यात्** (भाष्यम् ६।१।६४) इति । तथैव **'णो नः'** (६।१।६५) सूत्रविषयेऽभिहितम् ।

(छ) संहितया सूत्रप्रणयनमपि लाघवायेति वयं मन्यामहे । यद्यपि संहितया निर्देशे योगविभागविषये सन्देहावसरो जायते, तथापि तस्य व्याख्यानगम्यत्वान्न सन्देहः करणीयः । उक्तं हि–**'व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहादलक्षणम्'** इति ।

(ज) सूत्रकृता बहूनि सूत्राण्येवंरीत्या रचितानि, यया सूत्रस्य अंशविशेषो व्यर्थो भूत्वा कमपि अज्ञातं नियमं विज्ञापयति । सोऽयं नियमः परिभाषेत्युच्यते । इमाः सर्वाः परिभाषाः प्राचीनेषु व्याकरणेषु वाचनिकरूपेण स्थिता आसन्, पाणिनीये खलु तन्त्रे ज्ञापकसिद्धा भवन्ति[१] । एषाचार्यस्य शैली लक्ष्यते यत् स सूत्ररचनाबलेनैव परिभाषां ज्ञापयति, न तु कण्ठरवेण वक्ति । लाघवार्थमेवेयं पद्धतिराश्रिताऽऽचार्येण, अन्यथा गौरवं स्यादिति न रिक्तं वचः ।

(झ) संज्ञाकरणमपि तथैव मन्तव्यम् । **'लघ्वर्थं संज्ञाकरणम्'** इति जेगीयते महाभाष्ये । एतेन **'यदि संज्ञा लघिष्ठा न स्यात्**, तर्हि तस्या अन्वर्थत्वमेवाभ्युपेयमित्यपि विज्ञाप्यते । अकृतायां संज्ञायां चानेकशब्दयुक्तस्य संज्ञिनः वारंवारं निर्देशेन शब्दगौरवं स्यादेव ।

---

१—यथोक्तं नागेशभट्टेन —'प्राचीनव्याकरणतन्त्रे वाचनिकानि, **अत्र** पाणिनीयतन्त्रे ज्ञापकन्यायसिद्धानि......यानि परिभाषारूपाणि तानि **व्याख्यायन्ते'** (परिभाषेन्दुशेखरः) इति । **अत्रेदं विज्ञेयं यत् प्राचीनेषु व्याकरणेषु इमाः सर्वाः परिभाषा वाचनिकरूपेणैवासन् – इत्यत्र किमपि प्रमाणं नागेशेन न दत्तम्; नापि कैयटेन भाष्यकारेण वा एवंजातीयकं किमप्यभिहितम् ।**

(ञ) सूत्रेषु अर्थादेशनं न कृतमाचार्येण किमर्थमिदम् ? इति प्रश्नस्योत्तरे पतञ्जलिर्बभाषे–'**तच्च लघ्वर्थम्** (२।१।१)। व्याख्यातं च कैयटेन—'**लाघवार्थमर्था नादिश्यन्ते, अन्यथा गौरवमनवस्था च स्यात्**' इति। एवमर्थादेशनस्याकरणमपि लाघवार्थमिति मन्तव्यम्। [सूत्रेष्वर्थादेशनविषयको विचारोऽत्रैव भाष्यकैयटयोः स्पष्टः।]

(ट) सूत्ररचनायामुत्सर्गापवादरूपो यो नियमः सूत्रकृताऽस्थितः, सोऽपि लाघवमभिव्यञ्जयति। अनेन नियमेन अल्पैरेव शब्दैः बहूनामेवार्थानां विवरणं कर्त्तुं शक्यते – इति स्पष्टमेव।

लाघवविषय इदमपि स्मर्तव्यं यद् यत्र लाघवं न कृतं तत्र सर्वेषु स्थलेषु कोऽपि विज्ञापनीयोऽर्थः सूत्रकारस्य विद्यत एवेति व्याख्याकृद्भिर्निपुणं दर्शितम्। यदि पुनः कस्मिन्नपि सूत्रे शब्दगौरवं विद्यते –तर्हि तद् दोषायैव मन्यन्ते आचार्याः। पठ्यते तैश्च परिभाषाऽपि '**अर्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः**'' इति। वचनमिदं लाघवमहिम्नः परां कष्ठांविज्ञापयति।

लाघवस्यावश्यकर्तव्यतानियमस्य एकमेव अपवादस्थलं विद्यते। यथोक्तम्—**पर्यायशब्दानां गुरुलाघवचर्चा नाद्रियते**' इति। किञ्च यदि कस्मिंश्चित् स्थले शब्दलाघवे कृते अर्थबोधविषये गौरवं भवेत्, तर्हि तत्र शब्दलाघवं परित्यज्यते। मात्रापदादिलाघवविषये बहवो विषयाष्टीकाकृद्भिर्बहुत्र दर्शिताः, ते आकरग्रन्थेभ्य एवावगन्तव्या इति।

●

**विशकलितैः परकीयैः पदार्थजातैः स्वकाव्यविन्यस्तैः।**
**याचितकमण्डनैरिव न भवति शोभा विजातीया ॥**

—आचार्य श्रीविश्वेश्वरपाण्डेयस्य

## समर - मरणान्नैव भीति—
## रधुनोचिता जय-विजय-गीतिः



श्रीप्रभातमिश्रः

बर्बरैर्जन - शक्ति - पीनैः,
शब्द-साधित - शान्ति - लीनैः,
देव - भूमौ धूर्तचीनैः,
र्दाशता, बहु-रण - प्रीतिः ।

समर-मरणान्नैव भीतिरधुनोचिता जय-विजय-गीतिः ।

सहयोगिनं प्रति शान्ति-लघुता,
वन्दिनं प्रति विहित-पशुता,
प्रतिवेशि-भू - चंक्रमण - पटुता,
अस्ति यदि कस्याऽपि नीतिः ।

समर-मरणान्नैव भीतिरधुनोचिता जय-विजय-गीतिः ।

वरण - प्रदा, भव - मानवेभ्यः,
मरण-प्रदा, भुवि दानवेभ्यः,
शरण - प्रदा, शरणागतेभ्यः,
युग-युगाद् मद् - देश - रीतिः।

समर-मरणान्नैव भीतिरधुनोचिता जय-विजय-गीतिः।

को वदति मां शक्ति-हीनम्,
को वदति मां शस्त्र-दीनम्,
विद्धि मां विजय-प्रवीणम्,
सर्वदेयं संप्रतीतिः।

समर-मरणान्नैव भीतिरधुनोचिता जय-विजय-गीतिः।



श्री वि० श्री रङ्गनाथाचार्यः
शिरोमणिः, एम्०ए०

# श्रीमद्गीताकाव्यम्

गीताशास्त्रमिति प्रसिद्धोऽयं व्यवहारः लोके दृश्यते। मया पुनः गीताकाव्यमिति शीर्षकमदीयत। अत्र कारणमिदम्। द्वैत-विशिष्टाद्वैतादिसिद्धान्तप्रवर्तकाः, तत्तत्सिद्धान्तेषु निष्णाताश्च मननशीला मेधाविनः, ग्रन्थमिममालोड्य, पुनः पुनः विचार्य स्वस्वसिद्धान्तार्थान् निरणैषुः। नवीना अपि बहवः विद्याविलसितान्तरङ्गाः स्वप्रतिभानुरूपं विचारं कृत्वा बहून् अर्थविशेषान् प्राचीकशन्। किञ्चिज्ज्ञस्य मम तु प्रवृत्तिः न भगवद्गीतायाः वेदान्तार्थप्रदर्शने, अपि तु तत्र काव्यत्वबुद्धिं कृत्वा ये अर्थविशेषाः बुद्धिपथमारोहन्ति तेषां केवलं प्रतिपादने।

श्रीमद्रामायणम् आदिकाव्यं सर्वेषाम् अन्येषां काव्यानां मूलभूतमिति सर्वे जानन्ति। सर्वेऽपि कवयः शब्दतः अर्थतश्च श्रीमद्रामायणमुपजीवन्तीति प्रसिद्धमेतत्। आलङ्कारिकैः यत् काव्यलक्षणमभ्यधायि किं तत् सर्वं श्रीमद्वाल्मीकिकृतौ तथैव अनुपाल्यत इति प्रश्नस्य उत्थितिरेव न भवति यस्मात् तेषां लक्षणग्रन्थानां विषयसमर्पकमिदमेव रामायणम्। तद्वत् भगवद्गीता किम् आलङ्कारिकाभिक्लृप्तलक्षणविशिष्टा इति पर्यालोचनस्य नास्त्यावश्यकता। तथाऽपि आलङ्कारिकैः यदुक्तं काव्यलक्षणं तत् सर्वम् अस्मिन् ग्रन्थे सम्यक् समन्वितं पश्यामः।

महाकाव्यस्य लक्षणमिदमुच्यते—

सर्गबन्धो महाकाव्यमुच्यते तस्य लक्षणम्।
आशीर्नमस्क्रियावस्तुनिर्देशो वाऽपि तन्मुखम्॥

इतिहासकथोद्भूतमितरद्वा सदाश्रयम् ।
चतुर्वर्गफलायत्तं चतुरोदात्तनायकम् ॥

इत्यादिकं,

मन्त्रदूतप्रयाणाजिनायकाभ्युदयैरपि ।
अलङ्कृतमसङ्क्षिप्तं रसभावनिरन्तरम् ॥
सर्गैरनतिविस्तीर्णैः श्रव्यवृत्तैस्सुसन्धिभिः ।
काव्यं कल्पान्तरस्थायि जायेत सदलङ्कृति ॥

इत्यादि च ।

प्रथमं सर्गबन्ध इति । अष्टादशभिः अध्यायैः निबद्धमिदं गीताकाव्यम् । 'धर्मक्षेत्रे कुरुक्षेत्रे' इति वस्तुनिर्देशरूपः प्रारम्भः । इतिहासकथाभागः अत्र विव्रियते । चतुर्वर्गफलायत्तमिति यदुक्तं लक्षणं तदत्र निरूपयामः । धर्मार्थकाममोक्षेषु प्रथमः धर्मः कथमत्र निरूप्यत इति पश्यामः—

सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥

इति अनुष्ठेयकर्मणां भगवन्मूलतां, तेषां फलप्रदातृत्वं च प्रतिपाद्य—

'नियतं कुरु कर्म त्वं ।'
'तदर्थं कर्म कौन्तेय मुक्तसङ्गस्समाचर ।'
'देवान् भावयतानेन ते देवा भावयन्तु वः ।
'परस्परं भावयन्तः श्रेयः परमवाप्स्थ ।'
'तस्मादसक्तस्सततं कार्यं कर्म समाचर ।
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥'

इत्यादिभिः कर्मरूपधर्मानुष्ठानावश्यकतां, तत्रापि विहितकर्मणः फलासक्तिं विना कर्तव्यताम्, एवमनुष्ठितेन धर्मेण देवमनुष्यपरस्परभावनं, तद्द्वारा उभयलोकसमृद्धिम्, एतादृशधर्माननुष्ठाने आपद्यमानं प्रत्यवायं च स्पष्टं निरूपयति ।

शमो दमः तपः शौचं क्षान्तिरार्जवमेव च।
ज्ञानं विज्ञानमास्तिक्यं ब्राह्मं कर्म स्वभावजम् ॥

इत्यादिना तत्तद्वर्णाश्रमानुरूपाः कर्तव्याश्च धर्माः उपदिश्यन्ते अथ अर्थः,

'हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम्।'
इति अर्थप्राप्तिः भगवता निगीयते।

कामश्चात्र भगवतैव यथा प्रतिपादितः 'धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ' इति तद्वत् धर्माविरुद्धः कामः प्रतिपाद्यते। स च कामः भगवति काम इति परिष्क्रियते। श्रीभागवते एतादृशं भगवत्परं कामं सुनिरूपितं पश्यामः। रुक्मिणी श्रीकृष्णादन्यवरप्रस्तावप्रसङ्गे 'जह्याम्यसून्' इति प्रतिजानीते। सोऽयं भगवद्विषयः कामः अस्मिन् ग्रन्थे कर्तव्यतया उपदिश्यते। 'मय्यासक्तमनाः पार्थ' इति, 'तमेव शरणं गच्छ सर्वभावेन भारत' इति, 'मन्मना भव मद्भक्तः' इति बहुधा उद्बोध्यते।

चतुर्थ पुरुषार्थः मोक्षफलं तु 'अभयं ते प्रदास्यामि', 'मोक्षयिष्यामि मा शुचः' इत्यादिना सुस्पष्टं प्रत्यपादि। एवं चतुर्वर्गफलायत्तमिति लक्षणं सुष्ठु समन्वितं संदृश्यते।

चतुरोदात्तः अत्र नायको भवति। किञ्चिदिव युद्धवर्णनमप्यत्र दरीदृश्यते। भीष्मादीनां महतां युद्धविशारदानां, तेषां शङ्खध्मानस्य च वर्णनम् आजिवर्णनमेव भवति।

रसभावनिरन्तरमिति यदुक्तं तां रसपरिपूर्तिमप्यत्र ग्रन्थे अनुभवामः। भगवति रतिरूपा भक्तिः कर्तव्यतया अत्र रुक्मिणीवल्लभेन उपदिश्यते। सः भक्तिरूपः रसः उपस्कारक इत्यालङ्कारिकाणां मतम्। केचित्तु भक्ति रस इत्येव व्यवहरन्ति। भक्तिरसस्य प्रकारभेदानपि वर्णयन्ति। गोपस्त्रीणां कृष्णे प्रेमरूपा भक्तिः, कृष्णे अर्जुनस्य सख्यरूपापन्ना भक्तिः,

देवक्याः वात्सल्यरूपा भक्तिस्तस्मिन्, अन्येषां तु तस्मिन् परमात्मनि दास्यरूपा भक्तिरिति एक एव स भक्तिरसो बहुभिः प्रकारैरनुभूयते। मधुसूदनसरस्वतीकृते भगवद्भक्तिरसायननामके स्तोत्रग्रन्थे अयं भक्तिरसः प्रधानो भवति।

एतादृशभक्तिरसभरितम् इमं ग्रन्थं वयं पश्यामः। एवं यदा पार्थ-प्रार्थनया भगवान् स्वकीयम् ऐश्वरं रूपम् अनेकवक्त्रनयनम् अनेकाद्भुत-दर्शनं तस्मै प्रादर्शयत् तदा अद्भुतमद्भुतरसं वयं निषेवामः।

एवं श्रव्यवृत्तपूर्णमिदं काव्यम्। प्रायः अनुष्टुभा सङ्कलितमपि तत्र तत्र वृत्तान्तराणि विलसन्ति। द्वितीये, नवमे, एकादशे, पञ्चदशे, सप्तदशे चाध्याये वृत्तान्तरं पश्यामः।

अथ सन्धिरिति अभिधीयमानं, काव्यानां प्रधानभूतमङ्गम् अत्र कथं जागर्तीति द्रक्ष्यामः। यद्यपि सन्धिः नाटकेष्वेव प्रधानभूततया उपवर्ण्यते तथाऽपि तदङ्गं सर्वेषां प्रबन्धानां तुल्यमेव। प्रबन्धस्य प्रधानतया प्रतिपि-पादयिषितं विषयमादाय, तस्य आदौ, मध्ये, अवसाने च एकरूपेण तत्र यथा श्रोतृणां प्राधान्यता बुद्धिः स्यात् तथा निर्वहणं सन्धिः। एष पुनः दृश्यस्य श्रव्यस्य च समानः।

अत्र च गीताकाव्ये प्रधानतया प्रतिपाद्यमानः अर्थविषयः—अर्जुनस्य युद्धाभिमुख्यसंपादनमिति। द्वितीयाध्याये गीताचार्यः अर्जुनं प्रतिबोधय-न्नारभते—

‘कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम्।
अनार्यजुष्टमस्वर्ग्यमकीर्तिकरमर्जुन॥
क्लैब्यं मा स्म गमः पार्थ नैतत्त्वय्युपपद्यते।
क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परंतप॥” इति
‘तस्माद्युध्यस्व भारत।’
‘सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम्।’

'तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः ।'
'ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि ।'
'जहि शत्रुं महाबाहो'
'छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारत ।'
'तस्मात् सर्वेषु कालेषु मामनुस्मर युध्य च ।'

इति सर्वत्रापि पार्थस्य युद्धाभिमुख्यसंपादनं सम्यक् निरुह्यते ।

सदलङ्कारालङ्कृतवत्वं काव्यशोभायै कल्पते । अत्र च
'यथा नदीनां बहवोम्बुवेगाः समुद्रमेवाभिमुखा द्रवन्ति ।
तथा तवामी नरलोकवीराः विशन्ति वक्त्राण्यभिविज्वलन्ति ॥'
'यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता ।
'कूर्मोऽङ्गानीव सर्वशः'
'ऊर्ध्वमूलमधः शाखम्'

इत्यादिकम् उपमारूपकाद्यलङ्कारविभूषितमास्वाद्य मोदामहे ।

एवं काव्यस्यात्मा ध्वनिरिति बुधैर्यस्समाम्नातपूर्वः सः ध्वनिः अस्मिन् काव्ये कथं प्रतिभासत इति विचारयामः । ध्वन्यालोकग्रन्थे आनन्दवर्धनः ध्वनिविशेषं कञ्चन निरूपयन् एवमाह—

'अविवक्षितवाच्यस्य अत्यन्ततिरस्कृतवाच्ये प्रभेदे वाक्यप्रकाशता यथा—

'या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥'

अनेन हि वाक्येन न निशार्थः न जागरणार्थः कश्चित् विवक्षितः । कस्तर्हि ? तत्त्वज्ञानावहितत्वं, अतत्त्वपराङ्मुखत्वं च मुनेः प्रतिपाद्यत इति तिरस्कृतवाच्यस्य अस्य व्यञ्जकत्वम् ।' इति ।

पुनरप्यानन्दवर्धनः चतुर्थोद्योते महाभारतस्य शास्त्रकाव्यस्य परम-

तात्पर्यं चतुर्थपुरुषार्थो मोक्ष इति निरूपयन् लिखति 'मोक्षस्य च भगवत्प्राप्त्युपायत्वेन मुख्यतया गीतादिषु प्रदर्शितत्वात् ।' 'परम्परया वासुदेवादिसंज्ञाभिधेयत्वेन च अपरिमितशक्त्यास्पदं परं ब्रह्म गीतादिप्रदेशान्तरेषु तदभिधानत्वेन लब्धप्रसिद्धि' इति ।

कालिदासादिमहाकवीनां सूक्तयः तदनन्तरकालिकैः कविभिः स्वकृतीनां सौन्दर्यवर्धनाय क्वचित् शब्दतः क्वचिच्चार्थतः च उपादीयन्ते, स्वकृतिषु च निबद्ध्यन्ते । तादृशसम्मानपात्रं कालिदासः स्वरचनासु भगवद्गीतां क्वचित् स्थलेषु शब्दतः अर्थतश्च निबध्नन् गीतायाः काव्यत्वमुररीकरोति ।

न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन ।
नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि ॥

इतीमं गीताश्लोकं

अनवाप्तमवाप्तव्यं न ते किञ्चन विद्यते ।
लोकानुग्रह एवैकः हेतुस्ते जन्मकर्मणोः ॥
इत्यनेन स्वकीयश्लोकेन स्मारयति ।
सहजं कर्म कौन्तेय सदोषमपि न त्यजेत् ।

इतीदं भगवद्वचनं

सहजं किल यद्विनिन्दितं न खलु तत्कर्म विवर्जनीयम् ।

इत्यनेन अनुवदति । तथैव

ज्ञानाग्निस्सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन ।

इति पद्यार्धम्

इतरो दहने स्वकर्मणां ववृते ज्ञानमयेन वह्निना ।' इत्यनेन,

समदुःखसुखस्वस्थः समलोष्टाश्मकाञ्चनः ।
स गुणान् समतीत्यैतान्..................॥

इति पद्यम्
रघुरप्यजयत् गुणत्रयं प्रकृतिस्थं समलोष्टकाञ्चनः ।
इत्यनेन च अनुकरोति ।

एवं त्वय्यावेशितचित्तानां त्वत्समर्पितकर्मणाम् ।
गतिस्त्वं वीतरागाणामभूयस्सन्निवृत्तये ॥

इति इमं कालिदासश्लोकं पठतामस्माकं मनसि सद्य एव एतानि परमात्मनः पद्यानि समुन्मिषन्ति—

'मय्येव मन आधत्स्व मयि बुद्धिं निवेशय ।'
यत् करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥'
'यः प्रयाति त्यजन् देहं स याति परमां गतिम् ।'
'वीतरागभयक्रोधाः...............'
'यस्मिन् गता न निवर्तन्ति भूयः ।'



वीराणां चरितं प्रभावभरितं लेलिख्यते यद् बुधैः,
काव्यानां गरिमा प्रबन्धपटिमा जेगीयते यो जनैः ।
भूपानां महिमा कुनीतिलघिमा देदीप्यते यत्पदे,
किं किन्नैव विराजते रसभृते पूते महाभारते ॥

—प्रभातमिश्रः

श्रीश्रीमन्नारायण द्विवेदी
एम्० ए०

# शिव-राम-स्तोत्रम्

प्रयागस्थे सर गंगानाथ झा शोधसंस्थाने शिवरामस्तोत्रस्य एका पाण्डुलिपिः संरक्षिताऽस्ति । यद्यपीदं लघुतमं स्तोत्रकाव्यं तथापि कतिपयाभ्यो दृष्टिभ्यो महत्त्वपूर्णं विद्यते । सामान्यतयार्वाचीनेषु स्तोत्रेषु तेषां रचयितृणां नामोल्लेखो न प्राप्यते, किन्तु प्रस्तुतस्तोत्रस्य निर्मातृरूपे श्रीरामानन्दसरस्वत्या उल्लेखो वर्तते ।

अस्य महोदयस्य संक्षिप्तपरिचयस्तु इत्थम् - महामहोपाध्यायपण्डितगोपीनाथकविराजमहोदयेन 'काशी की सारस्वत साधना' नाम्नि स्वस्मिन् पुस्तके ( पृ० ६४-६५ ) सप्तदशशताब्द्या विदुषां परिचयं ददता व्यलेखि— 'इममेव कालं निकषा काश्यां रामानन्दसरस्वतीनाम्नो वेदान्तिसंन्यासिनः प्रादुर्भावो जातः । तस्य गुरोर्नाम गोपालसरस्वती आसीत् । स काश्यां न्यवसत् । स स्वस्य ग्रन्थेषु- ढुण्ढिराजकाशिकेशादिदेवान् प्रणनाम । अस्य कृतीनां नामानि — ब्रह्मसूत्रशाङ्करभाष्यस्य रत्नप्रभाटीका, ब्रह्मसूत्रवृत्तिः, ब्रह्मामृतवर्षिणी, पञ्चपादिकाविवरणस्य विवरणोपन्यासनाम्नी टीका— इति सन्ति । प्रस्तुतस्तोत्रस्य निर्माता सम्भवतोऽयमेव श्रीरामानन्दसरस्वती आसीत् । स्तोत्रस्य लिपिकाररूपे नन्दरामस्य नाम उट्टङ्कितं वर्तते, किन्तु लिपिकालस्य अभावोऽस्ति । पाण्डुलिप्यां पत्रकसंख्याः सप्तविद्यन्ते ।

भव विलोचन माधव मापते
सुकविमानसहंस शिवारते ।
जनकजारत राघव रक्ष मां
शिव हरे विजयङ् कुरु मे वरम् ॥५

अवनि-मंगल मंडल मापते
जलधि-सुन्दर राम रमापते ।
निगमगीतगुणस्तव गीयते
शिव हरे विजयङ् कुरु मे वरम् ॥६

द्रुपदजासुखदायकमव्ययं
मकरकुंडलशोभमुखाम्बुजम् ।
मुहुरहं प्रणमामि रमापते
शिव हरे विजयङ् कुरु मे वरम् ॥७

मृडमहेश परेश पते विभो
वृषभ-वाहन वेदमय प्रभो ।
गरुड-वाहन पावन पाहि मां
शिव हरे विजयङ् कुरु मे वरम् ॥८

पतितपावन नाम दयालुता
तव यशो विमलम्परिगीयते ।
तदपि माधव मां किमुपेक्षसे
शिव हरे विजयङ् कुरु मे वरम् ॥९

अमरदीपन देव रमापते
विषम तापपिना स्विथनोपमे[1] ।
मयि कथं करुणा तव जायते
शिव हरे विजयङ् कुरु मे वरम् ।।१०

हनुमतः प्रियतोषकर प्रभो
सुरसरिद्युति शेषरहो गुरो ।
मम विभो किमु विस्मरणं कृतं
शिव हरे विजयङ् कुरु मे वरम् ।।११

नरहरे रतिर..............[2]
पठति यः शिवरामकृतस्तवं
वसति रामरमाचरणाम्बुजे
शिव हरे विजयङ् कुरु मे वरम् ।।१२

प्रातरुत्थाय यो भक्त्या पठेद्वै स्तोत्रमुत्तमम् ।
विजयो जायते तस्य विष्णुलोकं स गच्छति ।।१३

श्रीरामानंदसरस्वतीविरचितं शिवरामस्तोत्रं सम्पूर्णम्



१, स्खलितः पाठः । २, त्रुटितः पाठः ।

## ग्रन्थसमीक्षा ● श्री शिवशङ्कर त्रिपाठी

**विक्रान्तभारतम् (नाटकम्)** लेखकः -डा० बी० आर० शास्त्रिमहाभागः (हैदराबादस्थोस्मानियाविश्वविद्यालये संस्कृतप्राध्यापकः)। प्राप्ति-स्थानम्--डा० बी० आर० शास्त्री एम्० ए०, पीएच्० डी० 'श्रीनिवास' १-१-३३६, ६३, विवेकानन्दनगरम्, हैदराबाद—२० (आन्ध्रप्रदेशः)। मूल्यम्—४।८०

ऐतिहासिकीयं नाट्यकृतिः। भारतदेशात् यवनानां मूलोच्छेदनं कृत्वा राजनयविशारदचाणक्य-साहाय्यमवलम्ब्य चन्द्रगुप्तेन मौर्यसाम्राज्यं संस्थापितमित्यस्य नाटकस्य कथानकम्।

लेखकेनात्र अङ्कविभाजन-परम्परां विहाय दृश्यविधानमेवाङ्गीकृतम्। इत्थं षोडशदृश्यान्येव सन्ति। त्रिंशत् प्रमुखपात्राणि, एवं भृत्याः दूताः पौरजानपदाश्च कथासूत्रं स्वस्वसामर्थ्यानुसारम् अग्रे नयन्ति। घटनास्थलं तु विशेषेण पाटलिपुत्रतक्षशिलापुष्कलावतीपटलपुरीनगर्यः।

कथानकदृष्ट्या संस्कृतसाहित्येऽयं सर्वथैव नवप्रयोगः। बहुदृश्यविधानमपि नवा रीतिः। सम्पूर्णेऽस्मिन्नाटके नीतिविदां विष्णुगुप्तचाणक्यमहाभागानां नीतिनैपुण्यं, धीरप्रवराणां चन्द्रगुप्तमहाराजानां शौर्यधीरत्वं च सहजेनैव प्रकटीकर्त्तुं नाट्यकारस्य सफलः प्रयासः। चतुर्थशतीकालीनभारतीयानां पारस्परिकविद्रोहरागिणां भर्त्सनम् एवं वीरविक्रमार्चनं प्रकटयन् कथयति सूत्रधारो नाटकस्य रचनारहस्यम्—

'अतो जयो नः सिद्धः'''वीराङ्गने। अस्मिन्नेव सन्दर्भे वीरविक्रमाश्रितं वस्तु समालम्ब्य केनचिदधुनातनेन कृतं विक्रान्तभारतमिति नवं रूपकमस्माभिरिदानीं प्रयोक्तव्यम्।'–(दृश्यं–२)।

नाटकस्य नायको चन्द्रगुप्तः। स तु शौर्यधैर्यादीनाम् उत्तमोत्तमगुणानां

भास्पदम् । स महान् राष्ट्रभक्तः । राष्ट्रद्रोहिणां कृते स महतीं भर्त्सनां व्यनक्ति–भीरुक! पश्यसि, नचिरादेव अभिसारपौरवयोर्विक्रमं दैवमेव कदने जयाजयौ निश्चिनोति ........इदं तु मां बाधते यद् भारतीया एव भारतीयानां शत्रवः'—(दृश्यम्—६) । आत्मानं भारतशौर्यरूपिणं भारतीयाना च एकमात्रनेतारं मन्यमानः अलक्षेन्द्रं विनिन्दन् उद्घोषयति—

क्षात्रधर्ममनुष्ठातुं त्वां द्रष्टुं वीरमानिनम्।
सर्वस्य भारतस्याहं दूतो भूत्वा समागतः ॥

(दृश्यम्—७)

यवनानाम् अत्याचारं दर्शयन् तान् उत्पाटयितुम् ऐक्यभावमवलम्ब्य प्रयत्नार्थ प्रेरयति—'पौरजानपदाः! यदेष यवनपतिरलक्षेन्द्रः पुरपत्तननगरखर्वटनैगमपुटभेदग्रामाणां नाशनं, शिशुनारीपुरुषाणां जीवनामेव दहनं, गणानामवस्कन्दनं, श्रियो विलुण्ठनं, धर्मस्य हननं कुरुते नैतद् यवनराज्यविक्रान्तम् । सर्वं तदस्मास्वरिणा प्रयुक्तस्य द्वैधस्यैव फलम् । तदस्माभिः संहिता कार्या। तदस्माभिररिणा विग्रहीतुं यातव्यम् ।'—(दृश्यम्—१३) ।

तत्र दशमे दृश्ये नीतिधुरन्धराणां चाणक्यमहाभागानां नीतिनिपुणताया परा काष्ठा वर्तते, यत्र स चन्द्रगुप्तद्वितीयेन सह आहितुण्डिकवेशेन उपसृत्य कपटेन अरिध्वंसनमकरोत्—

चाण०—सर्पाणां नामानि महावीराणामेव नामानि । सर्पाः!
अतो यूयं महावीराः ।

× × ×

चन्द्र०—नृत्य रे ताण्डवपण्डित! चन्द्रगुप्त!
धर्मशत्रवो ज्वलन्तु, देवशत्रवो द्रवन्तु ।
( असिं क्षिपति, निकनारः उरसि हतः )

निक०—हा! हा! हतोऽस्मि ।

अतएव षोडशे दृश्ये तस्य प्रशंसायां कथितम्—

सूत्र०—नमस्ते विष्णुगुप्ताय नमस्ते नीतिवेधसे ।

नटी—नमस्ते रुद्ररूपाय चाणक्याय नमो नमः ॥

नाटकेऽस्मिन् लेखकस्य नाट्यरचनाकौशलं पाठकानां हृदयम् आकर्षति। नाट्यवस्तूनां संघटनं, सम्मेलनं च सुष्ठुतरम्। घटनासंयोजनं लेखकस्य महती निपुणता दरीदृश्यते, यतः तस्य निर्वाहस्तेन साफल्येन कृतः। संवादे लघुवाक्यान्येव प्रयुक्तानि। कुत्रापि समासबहुलपदावल्या दर्शनं न जायते। प्रसादगुणपूर्णा शैली प्राञ्जला च भाषा। गीतानां प्रयोगोऽपि बाहुल्येन कृतः। येन नाटकस्य महत्त्वं वर्धितमेव। यथा—

गरलकण्ठकण्ठहार !
कैटभारियोगशयन !
क्षोणिचक्रभारवाह !
परीक्षिन्नृपालदमन !!
काकोदर ! कालकण्ठ !
क्ष्वेलायुध ! कुम्भीनस !
दर्वीकर ! नागराज !
पवनाशन ! भयदरूप !
सर्वशेष ! निर्विशेष ॥२॥

(दृश्यम्—१०)

अस्तु। नाटकमिदं सङ्ग्रहणीयं पठनीयं च। अनेन नाटकेन पाठकानां मनसि भारतराष्ट्रस्यातीतगौरवं प्रति आस्था राष्ट्रीयभावानां जागरणं च निश्चितरूपेण भवितुं शक्यते। लेखकेनाखण्डभारतस्य स्वरूपं यच्चित्रितं तत्तु दिव्यमेव—

विजयतामखण्डभारतम्।
शीताचलपूर्वदक्षिणप्रतीच्यवार्धिवप्रवलयवेष्टितम्,
ब्रह्मपुत्रासिन्धुजाह्नवीगोदाकावेरीदुग्धलालितम्।
सर्वऋतुप्रसवमुकुलपल्लवफलसुक्षेत्रारण्यराजितम्,
धर्मसत्यदयानिष्ठपौरजानपदमहाचरित्रभूषितम् ॥

(दृश्यम्—१५)

पुस्तकस्य मुद्रणप्रकाशनं तु मनोहरम्।

**आश्चर्यचूडामणिनाटकम्** [ 'रमामालती' संस्कृत-हिन्दी-व्याख्योपेतम् ]—व्याख्याकारः—पण्डित-रमाकान्तझा एम्० ए०, व्याकरणवेदान्तसाहित्याचार्यः। प्रकाशकः :—चौखम्बाविद्याभवनम्, वाराणसी—१। मूल्यम्—४।५०

वीरकार्याद्भुतरसभूयिष्ठत्वेनाश्चर्यकराणां चूडामणिरित्याश्चर्य-चूडामणि' रिति संज्ञा। शक्तिभद्रमहाकविरस्य नाटकस्य कर्त्ता। दाक्षिणात्योऽयं कविः। अष्टमशताब्द्या उत्तरार्द्धं नवमस्य पूर्वार्द्धं वा अस्य प्रादुर्भावकालः।

दक्षिणभारतस्येदं प्रथमं नाटकम् इति प्रकटयति प्रस्तावनायां नटीकथनम्- 'आर्य! अत्याहितं खल्वेतत्, आकाशं प्रसूते पुष्पम्, सिकताः तैलमुत्पादयन्ति, यदि दक्षिणस्याः दिशः आगतं नाटकनिबन्धनम्।' अस्तु, अद्भुतरसप्रधानत्वादस्य नाटकस्य संस्कृतसाहित्ये महत्त्वपूर्णं स्थानम्। यतः एकमेवेदं नाटकं, यस्मिन्नाश्चर्याद्भुतस्य वा रसस्य सम्यक् प्राधान्येन च परिपाकः दृश्यते। प्रथमद्वितीयतृतीयचतुर्थपञ्चमाङ्केषु विशेषेणाद्भुतरसपरिपाकः, यथा—

अस्यातिमात्रायतलोचनस्य
नतभ्रुवः कम्रपयोधरस्य।
आश्चर्यरत्नस्य विलासयोनेः
किमाकरो द्यौर्नु वसुन्धरा नु॥ (प्रथमोऽङ्कः)

× × ×

चरणनलिनसाध्यं यानमाहार्यमम्भः
शयनमवनिपृष्ठं मण्डनं स्नानमात्रम्।
तव तरुणि तथापि त्वं श्रिया चक्षुषी मे
हरसि पुरमयोध्यामावसन्तीव चित्रम्॥—(द्वितीयोऽङ्कः)

तत्र चतुर्थाऽङ्केऽपि नास्ति उपेक्षणीयोऽयमद्भुतः यत्र रामरूपेणागतं प्रच्छन्नं रावणं, सीताऽऽश्चर्यचूडामणिसाहाय्येन एवाभिज्ञातुं सफलतां

प्राप्ताऽऽसीत् । षष्ठाङ्के तत्राङ्गुलीयकमादाय सीतामुपसृत्य पवनात्मजेन-हनूमता राम-सन्देशो यदा कथितः, तदा स्वयमेव सीता दृष्ट्वा तदद्भुता-ङ्गुलीयकं विस्मयापन्ना सती कथयति—'इदं लोकाभरणस्याभरणम्, इदं रजनीषु रत्नदीपः, इदं वदनालङ्कारविकल्पादर्शः' इति किं नास्ति विस्मयसृष्टिः ? इत्थं सप्तमाङ्के सीताऽग्निपरीक्षाऽऽवसरे यदाश्चर्यदृश्यं समुपस्थितमभूत्, तद् दृष्टवा स्वयं रामः—'विस्मयपदमेतत् । ततस्ततः' इति निगदन् लक्ष्मणं पृच्छति । लक्ष्मणेन कथितः समस्त-वृत्तान्तः, यत्—

लक्ष्मण :—तदानीमाकाशे प्रवृत्ताः शङ्खपटहाः ।

× × ×

स्तिमितनयननमारात्पश्यतां नस्समन्ताद्  
व्यतिकरमिव रूपं विद्युतामादधानः ।  
अवनिभुवमनिन्द्यां ते पुरोधाय देवी—  
ममरवदनमाविर्देवता वह्निरासीत् ।।—१६

रामकथायाः शूर्पणखाविरूपणात् सीताऽग्निपरीक्षापर्यन्तं कथानकमस्य नाटकस्य विषयः । नाटकेऽस्मिन् वैदर्भी रीतिः । सर्वत्र प्रसादमाधुर्यगुण-योर्बलात् सहृदयरसिकानां हृदि रसानन्दस्य मधुरसञ्चारो सहजेनैव सम्भ-वति । समाससंश्लिष्टक्लिष्टपदानां तु कुत्रचिदेव संरचना दृश्यते । सर्वत्र सरलभाषायामेव गूढातिगूढभावानां व्यञ्जनाव्यापारः । यत्र-तत्र कालिदासभवभूत्यादीनां श्रेष्ठकवीनां प्रभावोऽपि स्पष्टतया लक्ष्यते, इति नास्ति सन्देहः । मनोहरसूक्तीनां समावेशः एवं सरलगिरया अनुपमकल्पनानिबद्धललितश्लोकानां छटा हरति साहित्यानुरागिणो हृदयम् । यथा—'यदेष बालेन बद्धो मुसलेन हन्यते ।' ( पञ्चमोऽङ्कः ) 'कथं वल्मीकात् हार उत्पद्यते' ( षष्ठाङ्कः ) इत्यादिसूक्तयः ।

श्रीमतां रमाकान्तझापण्डितवराणां संस्कृतहिन्दीव्याख्याविषये न किञ्चदपि कथनीयम् । यतो ऽयं तु संस्कृतसाहित्यं प्रति तेषां मह-

दास्थायाः परिचायकत्वेन सार्धं साहित्यानुरागिणां कृते श्लाघ्योपकारः। झामहोदयो निजेन अनेन प्रयासेन संस्कृतसाहित्यस्याक्षयनिधिरूपस्या नाटकस्य पाठनानन्दलाभं हिन्दीसाहित्यानुरागिणां कृतेऽपि सुलभमकरोत्। एतदर्थं स निश्चितमेव साधुवादार्हः। किन्तु मूलनाटकानुरूपा नास्ति व्याख्यारीतिः इति तु चिन्तनायम्। प्रारम्भभागे व्याख्याकारेण भूमिकायां नाटक-नाटककारविषये यद्विवेचनं कृतं तदपर्याप्तम्। नाटकस्य किं मूलभूतवैशिष्ट्यं कस्माद्धेतोः अस्य नाटकस्य व्याख्याऽनिवार्या, अद्भुत-रसस्यैव कथं कया रीत्या च निष्पत्तिरित्यादि तु न सम्यक्रूपेण लिखि-तम्। नाटककारविषये आसीत् तत्र विस्तृतविवेचनाया आवश्यकता।

अन्वयात्मकसंस्कृतव्याख्याया ऋते हिन्दीव्याख्या तु नाऽतिस्पष्टा। तत्रापि शब्दार्थानुसारिणी रीतिरनुसृता येन पाठकानां हृदये आपतति यत्र-तत्र अर्थ-सन्देहः। विशेषेण प्रथमाङ्के 'सेव्यतां वनान्तमारुतः', द्वितीयाङ्के 'पथि······मृगलोचने' (श्लोक १२)' तृतीयाङ्के 'को नु खलु मे गमनस्योपायः', 'नीत्पलाकृतिसितैर्मृणालैः' (श्लोक ३६), पञ्चमाङ्के 'स्थातुं यस्य······हास्यतपस्वी भवान्' ( श्लोक १० ), तथा 'दण्डो मे रजनिचरा ·····ममार्थः' ( श्लोक २० ) एवं षष्ठाङ्के 'स्वयमेव साहसं गतानु' एतेषां पदानामर्थसन्धाने बुद्धिव्यायामस्यावश्यकता दृश्यते। नेदमुचितम्। यत्र-तत्र मुद्रणदोषोऽपि सञ्जातः।

**महेन्द्रविक्रमविरचितं 'मत्तविलासप्रहसनम्'** [ हिन्दीव्याख्यो-पेतम् ] व्याख्याकारः—श्रीकपिलदेवगिरिः साहित्याचार्यः। प्रकाशकः-- चौखम्बा विद्याभवनम्, वाराणसी – १। मूल्यम्—१-२५

कीथादिमहोदयानां संस्कृतसाहित्येतिहासग्रन्थेष्वस्य 'मत्तविला-सप्रहसनस्य' विशदचर्चा कृताऽस्ति। एतेन सिद्ध्यति अस्य प्रहसनस्य महत्त्वम्। अस्य कर्त्ता महेन्द्रवर्मनामा कोऽपि राजा। लिखितमिदं यथा प्रस्तावनायां–'पल्लवकुलधरणिमण्डलकुलपर्वतस्य सर्वनयविजितसमस्त-सामन्तमण्डलस्य आखण्डलसमपराक्रमश्रियः श्रीमहिमानुरूपदानविभू-

तिपरिभूतराजराजस्य श्रीसिंहविष्णुवर्मणः पुत्रः शत्रुषड्वर्गनिग्रह परः परहितपरतन्त्रतया महाभूतसधर्मा महाराजः श्रीमहेन्द्रविक्रमवर्मानाम' इति ।

ऐतिहासिकदृष्ट्या प्रहसनस्यास्यात्यन्तं महत्त्वम् । तत्र तत्कालीन-षष्ठसप्तमशताब्द्या धार्मिकावस्थाया सम्यक् निदर्शनम्, सामाजिक-निम्नपरम्पराणामपि कथनं स्पष्टरूपेण दृश्यते । प्रचलितानां धार्मिक-साम्प्रदायिकसंघानां मिथ्याडम्बरपूर्णानां विविधसिद्धान्तानामुचिता-नुचितसारतत्त्वनिरूपणमेव प्रतीयते श्रीमन्महेन्द्रविक्रमवर्मणां मूलो-द्देश्यम् । यतः प्रहसनेऽस्मिन् नास्ति किमपि राजनीतिकम् अथवा सामा-जिकक्रियाकलापप्रमुखं चरित्रम् । तत्र तु शैवमतावलम्बी 'कापालिकः,' बौद्धधर्मानुशासितो बौद्धसंन्यासी 'शाक्यभिक्षुः,' विशेषेण प्रहसनकथासूत्रं कर्षयन्तौ तदशेषतामानीतौ । तृतीय. पाशुपतोऽपि नायककापालिकस्य सुहृद् शैव एव । पञ्चम उन्मत्तकः, एवं 'देवसोमा' कापालिकस्य सह-चरी, साऽपि तस्यैव धर्मेऽनुरक्ताऽस्ति ।

कथावस्तु लघु—देवसोमया सार्धं कापालिकः सुरापानाय तत्र काञ्चीपुरसुराऽपणं प्रविशति । तत्र यावदेव स सुराग्रहणाय उपक्रामति तावत् तं स्वकपालाभावो बाधते । तत्तु विस्मृतं कस्मिंश्चिदधिष्ठाने तेनैव कापालिकेन । ततः स द्वितीयया देवसोमया समं कपालमन्विष्यन् काञ्ची-पुरस्य वीथिकाऽऽपणेषु भ्रमति । तस्मिन्नेवाऽवसरे नागसेननामकः शाक्य-भिक्षुरेकस्तेन दृष्टः । चीवरान्ते प्रच्छन्नं तस्य भिक्षाभाजनमेव निजकपालं मन्यमानः स तत् स्वायत्तीकर्तुं तेन सह कलहायमानः यावद् विवादे तत्पर आसीत् तावदेव तस्य सुहृदः पाशुपतस्यागमनमभूत् । पाशुपतागमनेन तस्यात्मशक्तिर्द्विगुणा याता । पुनः पुनः स शाक्यभिक्षुः तैसह विवदमानो येन केन प्रकारेण निवृत्तेरुपायं चिन्तयन् असहायं स्वं मन्यमानो यावद् बुद्धभगवन्तं स्मरति तावदेव उन्मत्तकेनापरेण आनायासमेवोपसृत्य कापा-लिकस्य कपालं दत्तम्' इति एतावदेव कथानकम् ।

महेन्द्रवर्मणा पात्राणां समयानुसारिणी मनोदशाऽत्यन्तसाफल्येन चित्रिता । कापालिकस्य कपालं प्रति मोहः, शाक्यभिक्षोः परिस्थित्यनुसारिणौ ऊहापोहौ, पाशुपतस्य सहृदयत्वम्, एवम् उन्मत्तकस्य मनोभावस्य प्रकटनं, नाट्यकारस्य रचनानैपुण्यं दर्शयन्ति । उन्मत्तकप्रलापस्तु सहजेनैव तस्य मूर्त्तरूपं प्रकटीकर्त्तुमपि समर्थः । प्रसादमाधुर्यगुणाभ्यामलङ्कृतमिदं प्रहसनमवश्यमेव पठनीयम् । व्यंग्यरीत्या तत्र तत्कालीनबौद्धानामाडम्बरस्यापि भर्त्सना, तस्य बौद्धधर्मस्य समाजे अवनति—लक्षणंदर्शयति—

दृष्टानि वस्तूनि महीसमुद्र—<br>
महीधरादीनि महन्ति मोहात् ।<br>
अपह्नुवानस्य सुतः कथं त्व -<br>
मल्पं न निह्नोतुमलं कपालम् ।—१३

शाक्यभिक्षुं प्रति कापालिकस्येदं व्यंग्यवचनम् । अनेकान्यन्यान्यपि सन्ति एतादृशानि कथनानि ।

व्याख्याकारं प्रति कृतज्ञताप्रकाशनायाहं कथं तोषं लब्धुं शक्यः, यतः तेन महाभागेन शब्दानुसारी हिन्द्यामर्थ एव लिखितः, इति तु चिन्तनीयम् । यथा—'नन्वपूर्वतया त्वरितमनुष्ठातव्योऽयं प्रयोगः,' 'विमानशिखरविश्रान्तघनरसितसन्दिग्धमृदङ्गशब्दस्य'—,पृ० १०),' आवयोरप्यत्र भिक्षारुद्रभागो भविष्यति '(पृ० १२), 'एवं वीतरागिणा वीतरोषेणापि भवितव्यम्' पृ० २२] 'धर्मः खल्वस्माकं विषमपतितानुकम्पा,' [पृ० २४] इत्यादीनि स्थलानि द्रष्टव्यानि ।

# सहवर्ति-साहित्यम्

●

नीलकण्ठ शास्त्री

**पाटलश्री :**—सम्पादकः—श्रीदेवेन्द्रनाथशर्मा, सहायकाः—सर्वश्री डॉ० काशीनाथमिश्रः, अयोध्याप्रसादसिंहः, उमाशङ्करशर्मा 'ऋषिः,' परमानन्दशास्त्री महाभागाश्च। प्रकाशिका—संस्कृतनाट्य-परिषद् पटना। कार्यालयः— विहार—हिन्दी—साहित्य—सम्मेलन भवनम्, कदमकुआँ, पटना—३। वार्षिकं मूल्यम्—३. ५० रु०।

'पाटलश्रीः' पाटलिपुत्रस्थ-संस्कृतनाट्यपरिषदः त्रैमासिकं मुखपत्रमस्ति।

प्रथमवर्षस्य प्रथमद्वितीयतृतीयाङ्काः समुपस्थिताः। त्रिषु अङ्केषु लेखकवितानाटकादीनां सम्मिलितं प्रकाशनमस्ति। विशेषेण नाट्य-विषयप्रतिपादकमिदं पत्रम्, इति सुतरां प्रतीयते। यतः प्रकाशितेषु लेखेषु श्रीमताम् अयोध्याप्रसादसिंहमहोदयानां' संस्कृतनाटकं—कालिदासस्य नाट्यग्रन्थाः' एवं 'भवभूतेनाट्यवैशिष्ट्यानि' तथाऽऽचार्य परमानन्द-शास्त्रिणां' भरतभुनेः नाट्यशास्त्रम्' इति विशदकलेवरा निबन्धाः एवं श्रीमताम् उमाशङ्करशर्मणाम् 'पाटलश्रीः,' श्रीमतां विद्यानन्दशास्त्रिणां' 'वैशालीगौरवम्' इति शीर्षका लेखा नाट्यविषयमेवाधिकुर्वन्ति। इतर-रचनासु, पण्डितजटाशङ्कर झा महोदयानां 'संस्कृतं भारतीयसंस्कृतेः आधारभूतम्,' श्रीमतां विद्यानन्दशास्त्रिणां 'यज्ञं वष्टु धियावसुः,' एवं डॉक्टरकाशीनाथमिश्रमहोदयानां 'कुन्तकसम्मतं अलङ्कारतत्त्व-विवेचनम्-इति निबन्धा अपि पठनीयाः सन्ति।

संक्रतसाहित्यानुरागिणां कृते इयं 'पाटलश्रीः' पत्रिका सर्वथा मनो-रञ्जनी ज्ञानवर्धिनी च।

पत्रिकाया आकारप्रकारौ तु मनोहरौ।

**सूर्योदयः** ( हीरक-जयन्ति-विशेषाङ्कः )--सम्पादकः--गोविन्द नरहरि वैजापुरकरः। कार्यालयः -श्रीभारतधर्ममहामण्डल जगतगंज, वाराणसी । वार्षिकं मूल्यम्--पञ्चरूप्यकम् । अस्याङ्कस्य--रूप्यक-चतुष्टयम् ।

४२ वर्षतो निरन्तर प्रकाश्यमानोऽयं सूर्योदयः श्रीभारतधर्ममहामण्ड-लस्य मासिकपत्रमस्ति। आलोच्याङ्कस्त्वस्य ४२ तमस्य वर्षस्य तृतीय-चतुर्थपञ्चमाङ्कैः सम्भूय 'हीरक जयन्ति-विशेषाङ्करूपेण प्रकाशितः।

विशालकायस्यास्य विशेषाङ्कस्य द्वौ खण्डौ स्तः। प्रथमे हीरकजय-न्तिविवरणम् एवं द्वितीये वाङ्मयस्य विविधविषयेषु लेखाः सन्ति । विविधविषयकलेखानां संग्रहणेन विशेषाङ्कस्योपयोगितायां वृद्धिर्जाता। तत्र दर्शनसाहित्यकलाधर्मव्याकरणादीनां विविधाङ्गानां प्रतिपादनविवेच-नपरा लेखाः पठनीयाः। प्रकाशितेषु लेखेषु पूज्यकरपात्रिस्वामिनः 'वेद-स्वरूप-विमर्शः', श्रीमतां बलदेवउपाध्यायमहाभागानां 'धर्मो विश्वस्य जगतः, प्रतिष्ठा', डॉ० वासुदेवशरणअग्रवालमहोदयानां 'पारिजातः--वैदिक-दार्शनिक-विवेचनम्', डॉ० नीलकण्ठपुरुषोत्तमजोशिमहाभागानां 'द्वारालङ्करणपद्धतेः प्राचीना उल्लेखाः', श्रीमतां के० राजन्यशास्त्रिणां 'धर्मसूरि-विद्यानाथयोः जातिद्रव्यहेतूत्प्रेक्षोदाहरणविमर्शः', श्रीमतां कैला-शचन्द्रशास्त्रिणां 'जैनसिद्धान्ते लोकविनिवेशः' श्रीमतां जगन्नाथमहो-दयानां 'भारतीयदर्शनेषु बौद्धानां प्रकर्षः,' श्रीमतां मीठालालओझामहा-भागानां भारतीयज्यौतिषे वर्षाज्ञानम्', एवं श्रीमतां राजेश्वरशास्त्रिद्रा-विडमहाभागानां 'विश्वास-सदाचारौ हिन्दूसङ्घटनञ्च', तथा महामहो-पाध्यायगोपीनाथकविराजविद्वद्वराणां 'कायसिद्धिः' इत्यादयः लेखाः विशे-षेण मननीयाः। न केवलम् उल्लिखिता लेखाः अपितु तत्र प्रकाशिता अन्या रचना अपि मनोहराः पठनयोग्याश्च सन्ति। यथा महामहोपाध्याय-लक्ष्मणशास्त्रिणाम् 'अलि-विलापिसंलापः', श्रीमतां वैद्यनाथशास्त्रिणाम् 'अन्योक्ति-तारावली', श्रीमतां व्रजनाथझा महोदयानां 'अष्टमूर्तिरदूयत,' श्रीमताम् उमाशंकरशर्मणां 'खैयाम-भणितिः' एवं श्रीमतां रामकुबेर-

मालवीयमहाभागानां 'तीर्थयात्राप्रहसनम्' । डा० श्री० भा० वर्णेकरमहोदयानां काव्यप्रकाशीयो रसविमर्शस्तु साहित्यिकानां कृते अत्यन्तोपयोगिनी रचनाऽऽस्ति । किमधिकं, विशेषाङ्कोऽयं सर्वथैव संग्रहणीयः ।

**गुञ्जारवः**—सम्पादकः—प्रा० डॉ० व० त्र्यं० झाबरे, सहसम्पादकाः प्रा० द० ग० जोशी, प्रा० दे० खं० खरवंडीकर, प्रा० म० मा० बोपर्डीकर, एवं प्रा० श्री० स० केलकर महोदयाः । कार्यालयः—कालेश्वरमन्दिरम्, घुमरेगल्ली, अहमदनगरम् ( महाराष्ट्रराज्यम् ) । वार्षिकं मूल्यम् —५ । ००

गुञ्जारवोऽयम् अहमदनगरस्थायाः सनातनधर्मसभायाः त्रैमासिकं मुखपत्रम् ।

प्रथमवर्षस्य प्रथमद्वितीयतृतीयाङ्काः वर्तन्तेऽत्र समालोचनाऽवसरे । त्रिष्वङ्केषु अष्टादशलेखाः एवं नवकविताः प्रकाशिताः । प्रकाशितेषु लेखेषु विदुषां पी० वेङ्कटेश्वररशास्त्रिणां 'नैयायिकानां शाब्दबोधप्रकारः,' गणेश उमाकान्त थिटे महोदयानां 'किरातार्जुनीये अन्तर्विरोधः' (प्रथमाङ्के), वा० ना० जोशी महाभागानां 'मीमांसकानां नञर्थविचारः,' माधवदेशपाण्डे महोदयानां 'कालिदासीयनाटकेषु केवलं नायिका एव वर्तन्ते, न नायकाः' ( द्वितीयाङ्के ), गणेशउमाकान्तथिटे महाभागानां 'वेणी संहारे श्रृङ्गारः' एवं विदुषां प्रा०म०ना० बोपर्डीकर महोदयानाम्' अथ प्रणयमीमांसाचतुःसूत्री' नाम लेखाः विशेषेण पठनीयाः । कवितासु श्रीमतां माधवदशेपाण्डे महाभागानां 'अहो अकरुणाः खलु ईश्वराः' रवीन्द्रकुलकर्णी महोदयानां 'युवा पुराणो ललनाप्रियोऽयम्' एवं श्रीमतां प्रा० दे० खं० खरवंडीकराणां 'सुवचनसन्दोहः' मनोहराः सन्ति । तत्र तृतीयाङ्के 'पाण्डित्यप्रकाशः' इत्याख्यो नवोपलब्धः संस्कृतग्रन्थोऽपि ( श्रीकण्टकार्जुनमहाभागैः सम्पादितः ) प्रकाशितः । महत्त्वपूर्णोऽयं ग्रन्थः । 'उर्दूकाव्यमधु' इति शीर्षकेण अमेरिकावासिनाम् मूर्द्धन्यउर्दूकवीनाम् अशोक अकलूजकर महाभागानां रसमयकवितानां संस्कृतरूपान्तरमपि धारावाहिकरूपेण प्रकाश्यते ।

पत्रिकाया बाह्यरूपं तु शोभनम् ।

# कालिदासस्य कुन्तलेश्वरदौत्यम् ● मिथ्याभेदो

'सागरिकायाः' तृतीयवर्षस्य चतुर्थाङ्के 'कालिदाससमयनिर्णयो' नाम लेखः महामहोपाध्याय डाक्टर वा० वि० मिराशीमहोदयस्य प्रकाशितो वर्तते। अस्मिन् लेखे काश्मीरीयकविक्षेमेन्द्रस्य औचित्यविचार-चर्चायाः श्लोकंकस्य आधारेण तथा च कोल्हापुरसमीपे कस्मिंश्चिद्ग्रामे राष्ट्रकूटनृपतेः मानाङ्कस्य प्राप्तताम्रशासन-साहाय्येन, 'सेतुबन्ध' महाकाव्यस्य टीकाकर्त्रा रामदासभूपतिना निबद्धपुष्पिकाप्रामाण्येन च कालिदास-समयस्य गुप्तसम्राट्चन्द्रगुप्तविक्रमादित्यसमकालिकं निर्धारणं कृतमस्ति। स श्लोकस्तु अयम्—

इह निवसति मेरुः शेखरः क्ष्माधराणा—
मिह विनिहितभाराः सागराः सप्त चान्ये,
इदमहिपतिभोगस्तम्भविभ्राजमानं
धरणितलमिहैव स्थानमस्मद्विधानाम्।

अयं हि औचित्यविचारचर्चायां क्षेमेन्द्रेण 'अधिकरणौचित्यं यथा कुन्तेश्वरदौत्ये कालिदासस्ये' ति उदाहृतः।

भोजराजस्य 'शृङ्गारप्रकाशेऽपि' कालिदासेनोक्तोऽयं श्लोको दृश्यते—

असकलहसितत्वात्क्षालितानीव कान्त्या
मुकुलितनयत्नवाद्व्यक्तकर्णोत्पलानि,
पिबति मधुसुगन्धीन्याननानि प्रियाणां
त्वयि विनिहितभारः कुन्तलानामधीशः।

उक्तश्लोकद्वयेन इमं निर्णयं डा० मिराशी महोदयः गृह्णाति—

"एतस्मात्कालिदासोक्तश्लोकादिदं सुस्पष्टं भवति यत् स एव स्वाश्रयदा-तुर्महाराजस्य (अर्थाद् विक्रमादित्यस्य) आज्ञया कुन्तलेश्वराभिधस्य

तत्सामन्तस्यास्थाने गतस्तत्र च स्वप्रभुसमुचितासनस्यानासादनाद्भूमावेवोपविष्टः। तत्रस्थेन केनचित्सभ्येन 'किं भवान् अनास्तरणायां भूमावेवासीनः' इति पृष्टः सन् स्वाभिमानपूर्णेन धीरगम्भीरेण स्वरेण प्रति ब्रूते—नेदं सामान्यमासनम्। यतोऽस्मिन्नेव शेषसहस्रफणाधारनिष्कम्पे वसुधातले गिरिसार्वभौमो मेरुरासीनः सप्तसागराश्च। तेभ्यो गौरवेऽन्यूनस्य ममापीदमेवासनमुचितमिति। अहो प्रागल्भ्यं कविकुलगुरोः।"

अत्रायं निष्कर्षो यत् गुप्तसम्राजः द्वितीयचन्द्रगुप्तविक्रमादित्यस्य सभायां कालिदासस्य स्थितिः भवति तेन सम्राजा कालिदासः कुन्तलनरेशं प्रति दूतत्वेन प्रेषितः; तथा चायमेव कालिदासः मेघदूतरघुवंशादिकाव्यानां कर्त्ता अस्ति। स कुन्तलनरेशस्तु राष्ट्रकूटवंशीयः मानाङ्कस्य पुत्रो देवराजो वर्तते—"तद्वंशे मानाङ्कनृपतिपुत्रो देवराजो गुप्तसम्राड्द्वितीयचन्द्रगुप्तविक्रमादित्यसमकालीन इतिवक्तुं शक्यते।" ताम्रशासने मानाङ्कः कुन्तलानां प्रशास्ता उक्तोऽस्ति—"कोल्हापुरसमीपे कस्मिंश्चिद्ग्रामे प्राप्ते ताम्रशासनेऽस्य मानाङ्कस्य 'सविदर्भाश्मकविजेता मानाङ्कनृपतिः श्रीमान् कुन्तलानां प्रशासितेति वर्णनं सन्दृश्यते यतः सुस्पष्टं भवति यत् स कुन्तलदेशं प्रशास्ति स्म" मानाङ्कस्य पुत्रो देवराजोऽपि कुन्तलेश एव।

डॉ० मिराशीमहोदयस्य अस्मिन् निर्धारणे एता विप्रतिपत्तयः सम्भवन्ति—

१. कुन्तलेश्वरदौत्ये नियुक्तः कालिदासः कविः किं मेघदूतरघुवंशादिकाव्यानाम् कर्त्ता कालिदास एव; अस्मिन् विषये न किमपि अकाट्यप्रमाणं वर्तते, कालिदासस्य कुन्तलेश्वरदौत्यम् अनुमातुं वक्तुम् एव शक्यते। यतः कालिदासेन स्वकीयरचनासु न कुत्रापि कुन्तलदेशस्य वर्णनं विहितमस्ति, डा० मिराशी महोदयस्य मतेन 'कुन्तलदेशे कृष्णातीरवर्तिदक्षिणमहाराष्ट्रदेशस्यान्तर्भाव आसीदिति' परञ्च कालिदासः यो नदीनां पर्वतानाञ्च वर्णने, न केवलमेव वर्णने, रससिक्तचित्रणे स्वका-

व्येषु अवधानमना बभूव, तस्य जीवने यासां नदीनाम् येषां च पर्वतानाम् सङ्गमोऽभवत् तासां तेषां च वर्णने स नितराम् भावावहितचेताः प्रवृत्तो भवति, निर्विन्ध्याकालासिन्धू लघुनद्यौ अपि यस्य मेघदूते गृहीते वर्तेते, रघुवंशेऽपि 'कावेरी सरितां पत्युश्शंकनीयामिवाकरोत्' कावेरीनद्या विस्मरणं तेन कविना न कृतम्, कथं तस्मिन्नेव रघुदिग्विजय-प्रसंगे कृष्णा नदी अपि न स्मृता, यस्याः तीरे स्थिता कुन्तलेशराजधानी दूतकार्ये अवलोकिता, नदीनगर्योः संयोगे मुग्धमनाः कविः कथं शिप्रोज्जयिनीवर्णनमिव एतयोः विषये किमपि न लिखितवान् ।

२. कुन्तलानां प्रशासिता मानाङ्कः कदा आसीत्, अस्मिन् विषये डा० मिराशी महोदयस्य इत्थं निर्धारणं लेखे आस्ते–' अस्य राजवंशस्योत्कीर्णलेखेषु कालनिर्देशे न कस्यापि संवत उपयोगः कृतः तस्मात्तत्समयोऽनुमानेन निश्चेतव्यो भवति । तल्लेखाक्षरवटिकाप्रमाणेन स वंशः खिस्तोत्तरचतुर्थशताब्द्या मध्ये प्रथमं ख्यातिं जगामेत्यनुमातुं शक्यते । अतः वाकाटकगुप्तराजवंशयोः समकालिकः । तद्वंशे मानाङ्कनृपतिपुत्रो देवराजो गुप्तसम्राड्द्वितीयचन्द्रगुप्तविक्रमादित्यसमकालीन इति वक्तुं शक्यते ।"

किन्तु अस्मिन्नेव लेखे डा० मिराशी महोदयः कदम्बनृपतेः काकुत्स्थवर्मणः परिचयं दत्तवान्, यः काकुत्स्थवर्मा स्वदुहितृदानेन गुप्तादिनृपतीनां कुलानां प्रथयिता बभूव । मैसूरप्रदेशस्य शिमोगाजनपदे तालगुडाभिधे ग्रामे तस्य नृपतेः उपलब्धोत्कीर्णलेखेऽयं श्लोको दृश्यते—

गुप्तादिपार्थिवकुलाम्बुरुहस्थलानि
स्नेहादरप्रणयसम्भ्रमकेसराणि,
श्रीमन्त्यनेकनृपषट्पदसेवितानि
योऽबोधयद्दुहितृदीधितिभिर्नृपार्कः ॥

गुप्तादिपार्थिवेत्यादिना स्पष्टं भवति यत् वाकाटकसम्राजि प्रवरसेनप्रथमे स्वर्गते सति गुप्तसम्राजः समुद्रगुप्तस्य अभ्युदये जाते काकुत्स्थवर्मा

समुद्रगुप्तस्य सम्मानार्थं तस्मै स्वदुहितरं प्रददौ । एवं सति कदम्बनृपतीनां गुप्तसम्राजां च पारस्परिके गाढतमे मैत्रीभावे कदम्बनृपतीन् विजित्य अवधूय वा कुन्तलप्रशास्तृणां राष्ट्रकूटवंशीयानां मानाङ्कदेवराजप्रभृतीनाम् अभ्युदयः कथं संजातः अतः कुन्तलप्रशास्तारः राष्ट्रकूटवंशीया मानाङ्कनृपतयः ख्रिस्तोत्तरचतुर्थशताब्द्या मध्ये ख्यातिमेव न जग्मुः, यतः तदानीं निकषा कृष्णानदीं कुन्तलभूमेः प्रशास्तारः कदम्बनृपतयो बभूवुः। एवं च चन्द्रगुप्तविक्रमादित्यस्य राष्ट्रकूटवंशीयकुन्तलेश्वरदेवराजस्य च समकाले स्थितिरेव नास्ति, समकालस्थित्यभावे चन्द्रगुप्तविक्रमादित्यसभासभ्यस्य कालिदासकवेः यथोक्तकुन्तलेश्वरदौत्यमेव न सम्भवति ।

३. डा० मिराशीमहाशयः लेखेऽस्मिन् इदमपि उपन्यस्तवान् यत् सम्राजा चन्द्रगुप्तविक्रमादित्येन 'स्वजामातुर्द्वितीयरुद्रसेनस्य निधनानन्तरं प्रभावतीगुप्तनाम्न्याः स्वपुत्र्याः शासने साहाय्यार्थं केचन स्वाश्रिता मन्त्रिणः सेनापतयश्च विदर्भान्प्रेषिता इति वाकाटकानामुत्कीर्णलेखतोऽनुमातुं शक्यते । कालिदासस्तेष्वन्यतमः । विदर्भराजधान्यां नन्दिवर्धने कञ्चित्कालं निवसता तेन ततः सार्धक्रोशवर्तिरामगिरिनामकं तीर्थस्थानं बहुवारं दृष्टं स्यात् ।' अत्रेदमवधार्यते यद् विदर्भाणां प्रशासिता चन्द्रगुप्तविक्रमादित्यजामाता रुद्रसेनः तदानीम् आसाञ्चक्रे, तस्य निधने जाते वधूः प्रभावतीगुप्ता विदर्भान् प्रशशास ।

किन्तु लेखे डा० मिराशीमहोदयेन कुन्तलेश्वरस्य यः परिचयो दत्तः, तस्मिन् परिचये ताम्रशासनानुसारेण कुन्तलानां प्रशासिता श्रीमान् मानाङ्कनृपतिः सविदर्भाश्मकविजेता वर्तते, तथैव मानाङ्कपुत्रं देवराजमपि वयं मन्यामहे ।

तर्हि समकालमेव **विदर्भाणां** प्रशासितारः गुप्तसम्राड्जामातारः वाकाटकाः, **सविदर्भाश्मक**—विजेतारः गुप्तसम्राजां कृपाभाजनं राष्ट्रकूटाः च किं बभूवुःस्म । गुप्तानां संरक्षणे सम्प्राप्तेऽपि विदर्भप्रशास्तृन् वाकाटकान्

गुप्ताश्रिताः राष्ट्रकूटाः कथम् अजैषुः ? द्वितीयप्रवरसेनात् प्राक् रुद्रसेनस्य प्रतापिनः सम्राजः प्रथमप्रवरसेनस्य च शासनकाले राष्ट्रकूटानां विदर्भविजयकल्पना कथं कर्त्तव्या ? नैव सम्भवति एतदैतिह्यम् न च चन्द्रगुप्तविक्रमादित्यसभासभ्यस्य कविकालिदासस्य कुन्तलेश्वरदेवराजसभायां दूतकर्म अनुमातुं वयं शक्नुमः ।

कालिदासविषयिणीम् कुन्तलेश्वरदौत्य-आख्यायिकाम् ऐतिह्यनिकषे समारोप्य डा० मिराशी महोदयः तत्समर्थनेऽन्यदिदमपि निर्धारणं विहितवान्—"तस्माद्वाकाटकनृपतिप्रवरसेनार्थमेव कालिदासेन सेतुबन्धकाव्यं विरिचितमिति नात्र सन्देहलेशस्याप्यवसरः । यदि कालिदासो गुप्तसम्राड्द्वितीयचन्द्रगुप्तस्याश्रितस्तदैवैतच्छक्यमिति निर्देष्टुं नावश्यकम् । कालिदासो बहुवारं विदर्भेष्वागत्य कालमत्यवाहयदित्यनुमातुं शक्यते । तत्र निवसता तेन स्वमेघदूतकाव्यं विरचितं प्रवरसेनस्य सेतुबन्धकाव्यनिर्माणे च साहाय्यं दत्तमित्यतः सुस्पष्टं भवति ।"

अत्रेदं विवरणम्, सेतुबन्धमहाकाव्यस्य टीकाकर्ता रामदासभूपतिः स्वटीकारम्भे वदति–'इह तावन्महाराजप्रवरसेननिमित्तं महाराजाधिराज विक्रमादित्येनाज्ञप्तो निखिलकविचक्रचूडामणिः कालिदासमहाशयः सेतुबन्धप्रबन्धं चिकीर्षुः ।' अस्मिन् सन्दर्भे प्रवरसेनस्य महाराजेति विक्रमादित्यस्य च महाराजाधिराजेति पदवी निर्दिष्टा । अयमेव च पदवीनिर्देशो द्वितीयप्रवरसेनस्य सर्वेष्वेव ताम्रशासनेषु दृग्गोचरीभवति । ताम्रशासनेऽप्युल्लेखोऽस्ति 'महाराजाधिराजदेवगुप्तसुतायां' प्रभावतीगुप्तायामुत्पन्नस्य......वाकाटकानाम्परममाहेश्वरमहाराजश्रीप्रवरसेनस्य वचनात् ।' [देवगुप्त इति गुप्तसम्राड्द्वितीयचन्द्रगुप्तविक्रमादित्यस्य प्रियं नामेति ऐतिहासिकानां विदितम् ]'

पदवीनिर्देशसाम्येन डा० मिराशीमहोदयेन टीकाकर्तुः रामदासभूपतेः वचनस्य प्रामाण्यं स्वीकृतम् यत् द्वितीयप्रवरसेननिमित्तमेव चन्द्रगुप्तविक्रमादित्यस्य आज्ञया कालिदासः सेतुबन्धप्रबन्धं विरचितवान् । द्वितीय-

प्रवरसेननिमित्तं प्रबन्धरचनाया उल्लेखः न कस्मिन्नपि ताम्रशासने वर्तते । प्रवरसेनरामदासभूपत्योः समयस्थितौ सहस्रवर्षाणामन्तरम् भवति, अतएवेदम् अनुमातुं वयं शक्नुमः यद् रामदासभूपतिनापि उक्त उल्लेखः आख्यायिकाया बलेन विहितः, अथवा एतदर्थम् तेन आख्यायिकाया अवतारणा कृता । मूलग्रन्थस्य पुष्पिकायां नेत्थं विवरणं वर्तते । न चायमुल्लेखः किमपि ऐतिह्यं स्पृशति ।

ताम्रशासने टीकारम्भे च यत् पदवीनिर्देशसाम्यं विद्यते तत्साम्यं तु टीकाकर्तुः रामदासभूपतेः स्वस्य प्रवरसेनेन सह स्वस्वामिना जलालदीन्द्र-अकबरस्य चन्द्रगुप्तविक्रमादित्येन सह तुलनार्थं कल्पितं कविकौशलमेव नान्यत् । रामदासो भूपतिः स्ववचसैव एतद् अमंस्त—

धीराणां काव्यचर्चाचतुरिमविधये विक्रमादित्यवाचा
यं चक्रे कालिदासः कविकुमुदविधुः सेतुनामप्रबन्धम् ।
तद्व्याख्यासौष्ठवार्थं परिषदि कुरुते रामदासः स एव
ग्रन्थं जल्लालदीन्द्रक्षितिपतिवचसा रामसेतुप्रदीपम् ॥

अन्यच्च—

दिनेशभक्त्या जगति प्रकाशस्ततः सुतोऽजायत रामदासः,
आसेवते जिष्णुमिव क्षितीन्द्रं यः सर्वभावेन जलालदीन्द्रम् ।

अतः ताम्रशासनटीकारम्भयोः घुणाक्षरन्यायपतितेन पदवीसाम्येन वयमिदं निश्चेतुं न पारयामो यत् द्वितीयप्रवरसेननिमित्तं कालिदासः चन्द्रगुप्तविक्रमादित्याज्ञया सेतुबन्धप्रबन्धं विरचितवान् ।

तदेवं श्रद्धाभाजनस्य महामहोपाध्यायमिराशीमहानुभावस्य तस्मिन् लेखे कुन्तलेश्वरदौत्यश्लोकम् आधारीकृत्य विहिता ऐतिहासिक्या उपपत्तयः कालिदाससमयनिर्धारणे गवेषणामूलप्रमाणानि न प्रस्तुवन्ति । कालिदासस्य स्थितिकालनिर्धारणं, सेतुबन्धमहाकाव्यस्य रचयितृनिर्णयश्च पुनरपि पूर्वग्रहमुक्तमनुसन्धानम् अपेक्षेते ।

## आस्माकीनम्

### गोरक्षा-आन्दोलनम्

भारतीयसंस्कृतेराशुबोधकेषु प्रतीकेषु गोपूजाऽन्यतमाऽस्ति । गोपूजाया मूलं वेदेषु विद्यते। वेदानन्तरं पुराणेषु स्मृतिषु च सर्वत्र न केवलं गोवधस्य निषेधः, तस्याः पूजनस्य संरक्षणस्य च शास्तिर्विद्यते। अत्र विषये धार्मिकान्धविश्वासो नैव मन्तव्यः परमेतदनु तेषां मुनीनां सुनिश्चितं वैज्ञानिकं मननमासीत् येषां समक्षं देशस्यास्य भौगोलिकी, आर्थिकी तथा सामाजिकी पृष्ठभूमिरवर्तत। महाभारतस्य भगवतः श्रीकृष्णस्य यावती ख्यातिः कुरुक्षेत्रस्य महासमर विजयित्वनिबन्धना वर्तते तावती प्रसिद्धिस्तथा देशस्यास्य जनजीवने तस्य महती लोकप्रियता च गोचारकत्वप्रयुक्ताऽप्यस्ति। भारतवर्षस्य जनजीवनं गवा सह मातृभावेन सम्बद्धमस्ति। अस्माकं कृषिस्तथा तत्सम्बद्धार्थविकासो गोपालनस्याधारमपेक्षेते। अस्यां स्थितौ यद्यस्मिन् देशे गोरक्षाया उपेक्षा क्रियेत तर्हि न केवलं धर्मस्यैवोपेक्षा भविष्यति, अपि तु जनधर्मं कृषोवलबलमपि पङ्गुतामेष्यति। अतो गोरक्षायाः प्रश्नोऽस्य देशस्य कृते महत्त्वपूर्णः प्रश्नो विद्यते। अस्य समाधानं नितान्तमावश्यकम् । अन्यथाऽस्माकं राष्ट्रीयताया अस्तित्वमपि संशयास्पदं स्यात् ।

देशस्य पराधीनतया सह त्रयोदशशताब्द्यां गोरक्षायाः उपेक्षा प्रारभ्यत। सम्भवतोऽस्या उपेक्षाया मूले एतद्देशवासिनां जनानां धार्मिकभावनोपरि कुठाराघातकरणमेव प्रमुखं लक्ष्यमासीत्। १९१४ विक्रमाब्दे आङ्गलशासनं निष्कासयितुं यः स्वतन्त्रतासंग्रामोऽभवत्, तत्र जनजागरि विभिन्नेषु कारणेष्वन्यतमं कारणं गोवधोत्पन्नोत्तेजनाऽप्यासीत्। यदा स्वतन्त्रताऽऽन्दोलनस्य नेतृत्वं महात्मनो गान्धिनः सबलकरेषु न्यस्तं तदा स महानुभावो गोरक्षायाः प्रश्नमपि स्वीकृतवान्।

जनतायाः सङ्घर्षोऽन्ततो विजयी जातस्तथा वयं २००४ विक्रमाब्दे

स्वतन्त्रा अभवाम। खेदस्य विषयोऽयं यत्स्वतन्त्रताप्राप्त्यनन्तरं याऽऽशाऽऽसीत् सा तु दूरेऽपास्ता। अस्माकं शासकवर्गेण लोकमतविरुद्धेऽपि गोवधे निषेधाज्ञा न विहिता।

स्वातन्त्र्येण सहैव गोरक्षायाः साधिकारा याचना बोभवीति। परन्तु स्वतन्त्रतायास्तपसस्त्यागस्य च धनिनोऽस्माकं शासनकर्णधाराः प्रभुत्वावलेपात् गोरक्षां प्रति दृष्टिं न दत्तवन्तः। प्रसन्नताया विषयोऽयं यद्गतवर्षे गोरक्षामहाभियानसमितेः स्थापना जाता तथा देशस्यानेके पूज्या महात्मानो नेतारः सामाजिककार्यकर्तारश्च प्रयासेऽस्मिन् दत्तावधानाः सन्ति यद्भारते सम्पूर्णरूपेण गोहत्यानिरोधो जायताम्। गतनवम्बरमासस्य सप्तमितौ सप्तलक्षजनैर्गोरक्षार्थं दिल्लीराजधान्यां यद्विशालं प्रदर्शनं प्राकारि तेन गोरक्षाम्प्रति जनजागरणस्याभिसङ्केतो लक्ष्यते। सम्पूर्णदेशे सर्वथा गोवधनिषेधार्थं महामहिम जगद्गुरुनिरञ्जनदेवतीर्थ शङ्कराचार्यस्तथा पूज्य प्रभुदत्तब्रह्मचारी च त्रिसप्ततिदिनावधि अनशनं कृत्वा धर्मप्राणस्य भारतस्य महिमानं तपस्यां च प्रतिष्ठापितवन्तौ, अनयोः तपसा देशे जागरणं जातम्, शासनं च जनताया विचारम् अन्वभवत्, ततत् पुनः गोवधनिषेधार्थं वैधानिकं प्रयासं प्रवर्तयतु इति कामना आस्ते।

## महर्षिः सातवलेकरश्चिरञ्जीवतु

वर्तमानयुगस्य महान् वेदज्ञो महर्षिः श्रीपाददामोदरसातवलेकरः 'जीवेम शरदः शतम्' इति वेदवाक्यमक्षरशश्चरितार्थं कृतवान्। तेन मनीषिणा सुरभारत्या राष्ट्रभारत्याश्च महती सेवा कृताऽस्ति। सोऽस्माकमृषिपरम्परायाः स्तम्भो विद्यते। तं दृष्ट्वा वयं वेदधर्मस्य तथा भारतीयसंस्कृतेरुज्ज्वलातीतायास्तित्वं प्रदद्मः। महर्षेर्दीर्घायुष्ट्वाय वयमीश्वरमभ्यर्थयामहे कामयामहे च यत्तस्य महानुभावस्य देदीप्यमानं जीवनं सूर्यरश्मिरिवास्मान्नद्बोधयदास्ताम्!

# Sangamani

**Sanskrit Quarterly Magazine**

●

Edited by

**Prabhat Shastri, Sahityacharya**

●

Annual Subscription
Rs. Twelve only
Rs. 3/50 per copy
[ IN FOREIGN ]

●

Published by Prabhat Shastri for Sanskrit Sahitya Parishad, Daraganj, Allahabad–6 ( India ) and Printed by him at—

Onkar Press, Allahabad (India)

पंजी० स० आर्० एन्० ९७४४ ● Reg. No. R. N. 9744

# पाठकान् प्रति विनिवेद्यन्ते

●

'संगमनी' पत्रिका प्रकाशनमेति; किन्तु आर्थिकदृष्ट्या पराधीनेयं निजजीवनद्वितीयाब्दं प्राविशत्। भवन्तोऽस्याः प्रियपाठकाः। वर्षकात् पत्रिकेयं भवत्सेवायां निःशुल्कं प्रेष्यते। जानन्त्येव भवन्तो यदियं प्रयागस्थसंस्कृतसाहित्यपरिषदा केवलं संस्कृतभाषायास्तत्साहित्यस्य च प्रचारप्रसारावुद्दिश्य प्रकाश्यते। संस्कृतवाङ्मयस्य शोधात्मकमनुशील-नमस्माकं महत्त्वपूर्णं लक्ष्यं विद्यते।

पत्रिका स्वोद्देश्ये तदैव सफला स्याद्यदा तस्याः संस्कृतानुरागिणः पाठकास्तत्प्रचारप्रसारयोरपि स्वकीयं यथासम्भवं सहयोगं प्रदद्युः

पत्रिकायाः प्रियपाठकानाम्पुरतोऽस्माकं निवेदनं यत्ते स्वयमस्या ग्राहको भूत्वा पत्रिकाया विकासे साहाय्यं ददतु तथा स्वप्रयत्नैरेकमेकं ग्राहकं निर्माय पुण्यकार्यस्य श्रेयो विन्दन्तु।

पूर्णं विश्वसिमः—'संगमन्या' प्रचारप्रसारयोः पाठकानाम् एवंविधं सहयोगं प्राप्स्यामो वयमिति।

**संगमनी—कार्यालयः**

**दारागंज—प्रयागः (उत्तर प्रदेशः)**

# संगमनी

संस्कृत-त्रैमासिकी

द्वितीये वर्षे
तृतीयोऽङ्कः

संस्कृत-साहित्य-परिषद्

दारागंज-प्रयागः।

उत्तरप्रदेशीयशासनस्य शिक्षा-विभागः
इमाम् पत्रिकां विद्यालय-महाविद्यालय-
दीक्षाविद्यालयीयपुस्तकालयेषु
क्रयार्थं स्वीकृतवानस्ति •

# अनुक्रमः

•

# संगमनी

# Sangamani

Sanskrit Quarterly

संस्कृत-त्रैमासिकी

द्वितीयवर्षे तृतीयोऽङ्कः
२०२३ वैक्रमाब्दः



सम्पादकः

**प्रभात शास्त्री**

सहसम्पादकौ

**तारिणीश झाः** **डॉ० जयशङ्कर त्रिपाठी**



प्रयागस्थ-संस्कृत-साहित्य-परिषदः प्रकाशनम्

कार्यालयः
संगमनी
दारागंज—प्रयाग

वार्षिकं मूल्यम्
रु० ५·००
प्रत्यङ्कम् रु० १·५०

परामर्श-समज्या

डॉ० हरवंशलाल शर्मा (अलीगढ़म्)

श्रीबालकृष्णरावः (प्रयागः)

•

लक्ष्यं योजना च

- इयं संगमनी संस्कृतस्य निःस्वार्थसेवाया नामान्तरम् ।
- अस्यां संस्कृतवाङ्मयविषये गवेषणापूर्ण-लेखानां परिचर्यायाश्च प्रकाशनम्,
- संस्कृतभाषाया अप्रकाशितग्रन्थस्य च प्रकाशनम् भवति ।
- अनया संस्कृतवाङ्मयस्य संस्कृतभाषायाश्च प्रचाराय प्रसाराय च प्रयत्नो विधीयते ।

•

# संगमनी

अहं राष्ट्री संगमनी वसूनाम्

—ऋग्वेदे १०।१२५।३

२ वर्षे      संवत् २०२३ वि०      ३ अङ्कः

## माङ्गलिकम्



कल्याणं वितरन्तु वः पृथुजटाजूटाग्रविस्तारिण--
स्ते चूडाशशिनः शिरःसुरधुनीधारानुकाराः कराः,
यानुत्प्रेक्ष्य मदोष्मभारविधुरे शुण्डारदण्डं मृषा
हेरम्बे घटयत्यनारतमभूदुल्लासिहासो हरः ।

—वत्सराजस्य

कोपस्तेज इति ग्रहः स्थितिरिति क्रीडेति दुश्चेष्टता
माया च व्यवहारकौशलमिति स्वच्छत्वमित्यज्ञता,
दौर्जन्यं स्फुटवादितेति धनिनामग्रे बुधैर्यद्वशा--
द्दोषोऽपि व्यपदिश्यते गुणतया तस्मै नमोऽस्तु श्रिये ।

—शालूकस्य

डॉ० जयशङ्कर त्रिपाठी

# काव्यादर्शस्य मूलपाठो द्विपरिच्छेदात्मक एवासीत्

'काव्यादर्श' नामा आचार्यदण्डिविरचितः काव्यशास्त्रीयो लक्षण-ग्रन्थ आस्ते। एष ग्रन्थोऽस्य प्रणेता दण्डी च संस्कृत-काव्यशास्त्रेतिहासे कालनिर्धारणविषये विवादजनयितारौ वर्तेते।[१] ईस्वीषष्ठशताब्द्यां भामहेन 'काव्यालङ्कार' नामा लक्षणग्रन्थो विरचितः। तस्मिन् ग्रन्थे स भामहो दण्डिनः स्थापनाविषयान् प्रत्याख्यातुं प्रवृत्तोऽभूत्, एतद्विचारयितुम् अन्य लेख एव प्रभवति, अत्र नास्ति विस्तारस्यावकाशः। अत्र तु विचारयामो यद् दण्डिविरचितस्य काव्यादर्शस्य मूलपाठः कियान्, किंस्विद् द्विपरिच्छेदात्मकः त्रिपरिच्छेदात्मको वा।

अधुना काव्यादर्शे त्रयः परिच्छेदा वर्तन्ते। तेषां विषयविभागस्तु एवंविधोऽस्ति—प्रथम-परिच्छेदे काव्यशरीर-वाणीमार्ग-गुणानां विवेचनम्, द्वितीय-परिच्छेदेऽलङ्काराणां व्याख्यानम्, तृतीय-परिच्छेदे यमक-चित्रबन्ध-प्रहेलिका-काव्यदोष-दोषाभावरूपगुणानाञ्च परिचयः। मद्रास-प्राच्य-संशोधनमन्दिर-संस्थायां प्राप्तायां काव्यार्शस्य प्रतौ, एम्० रङ्गाचार्येण संपादितायां ब्रह्मवादिमुद्रणालयमद्रासात् मुद्रितायां प्रतौ च काव्यादर्शस्य परिच्छेदचतुष्टयं वर्तते। तत्र चतुर्थपरिच्छेदे काव्यदोष-दोषाभावगुणयोश्च विवेकः। एवं काव्यादर्शस्य चतुर्णां परिच्छेदानाम् ऐतिह्यमपि दृष्टिपथमायाति।

प्रथमपरिच्छेदे लक्षणग्रन्थानां परम्पराम् अनुसृत्य आचार्यदण्डिना विवेच्यविषयाणां गणना अकारि। तत्र गणनायां न च ते विषया ये तृतीय-परिच्छेदे, तृतीय-चतुर्थपरिच्छेदयोर्वा निरूपिताः सन्ति। अन्यच्च

१ हिस्टरी आव संस्कृत पोयटिक्स (डॉ० सुशील कुमार डे) पृ० ५७

तृतीयपरिच्छेदस्य कारिकासु श्लथभाषा-वृत्तिः, तासां वैदर्भवृत्तिलालित्य-शून्यता (यतो दण्डी दाक्षिणात्यस्य वैदर्भकाव्यसम्प्रदायस्य प्रणेता), प्रथम-द्वितीयपरिच्छेदयोरागतानां कासाञ्चित् विधानामेव तृतीयपरिच्छेदे प्रकारान्तरेण प्रस्तुतीकरणम्, प्रथमपरिच्छेदे सरस्वत्याः स्तवनम्, विदग्धगोष्ठ्यां तस्या अनुग्रह-कामना तृतीयपरिच्छेदे त्वभिसरणाय मदिरेक्षणया वनितया सह वाण्या रूपकम्—इत्यादीनि एवंविधानि तथ्यानि सन्ति यानि अस्मान् चिन्तयितुं प्रेरयन्ति यत् काव्यादर्शस्य तृतीयपरिच्छेदस्य कर्त्ता किं स एव अस्ति यः प्रथमद्वितीयपरिच्छेदौ रचयाञ्चक्रे। स्वनिर्धारणे एष विषयोऽकाट्य-प्रामाण्यमपेक्षते तथापि लक्षणग्रन्थस्यास्य अन्तरङ्गानुशीलनेनापि तृतीयपरिच्छेदस्य भिन्नकर्तृकत्वं प्रकटीभवति, एवंविधानुशीलनस्येमे निष्कर्षाः सन्ति—

## विषयप्रवर्तनगतभेदः

१. प्रथमपरिच्छेदे २ य कारिकातः १० म कारिका-पर्यन्तं विवेच्य-विषयस्य निर्देशोऽजायत। तत्र व्याख्यानार्थमिमे विषया निर्दिष्टाः सन्ति—वाण्याः सम्यक् प्रयोगः,[१] काव्यस्य दुष्टता (अर्थात् गुण-प्रयोगेषु दोषः),[२] मार्गाः,[३] काव्यानां शरीरम् अलङ्काराश्च।[५]

नात्र चित्रप्रकारस्य तदुपभेदानां च निर्देशः। 'गुणदोषानशास्त्रज्ञः' इत्युल्लेखे 'दोषस्य' सम्बन्धो न तु तृतीयपरिच्छेदे निरूपितैः काव्यदोषैः सह भवति। अत्र गुणदोषाभ्यां प्रथमपरिच्छेदे निरूपितस्य मार्गस्य गुणाः, गुणानामभावे काव्यप्रयोगे सम्भाविता दोषा एव निर्दिष्टा

१. काव्यादर्शः २।६, गौर्गौः कामदुघा सम्यक्प्रयुक्ता स्मर्यते बुधैः।

२. स एव १।७, तदल्पमपि नोपेक्ष्यं काव्ये दुष्टं कथञ्चन।

३. स एव १।८, गुणदोषानशास्त्रज्ञः कथं विभजते जनः।

४. स एव १।९, वाचां विचित्रमार्गाणां निबबन्धुः क्रियाविधिम्।

५. स एव १।१०, तैः शरीरं च काव्यानामलङ्काराश्च दर्शिताः।

भवन्ति, ते च दोषा एते—अनतिरूढः,[1] वर्णनादस्य वैषम्यम्,[2] बन्धपारुष्यम्, शैथिल्यम्,[3] ग्राम्यता,[4] निष्ठुराक्षरः,[5] नेयत्वञ्च।[6] मार्गस्य दशानां गुणानां विवेचनेन सह एते दोषा अपि व्याख्यां लभन्ते. एषु केषाञ्चन दोषानामभाव एव गुणानां स्वरूपम्, यथा निष्ठुराक्षरस्याभावः सुकुमारता, अर्थनेयत्वस्याभावः अर्थव्यक्तिः स्फुटत्वेन भासेते। भामहोऽपि 'काव्यालङ्कार' ग्रन्थे प्रथमपरिच्छेदे एतेषु दोषेषु केषाञ्चन परिचयं वैदर्भगौडकाव्ययोः व्याख्यानेन सह निबध्नाति, केषाञ्चन च तद्व्याख्यानं कृत्वा सद्य एव तत्रैव प्रस्तौति।[7] अतो दण्डिनः 'गुणदोषानशास्त्रज्ञः' इत्युल्लेखे निर्दिष्टस्य दोषस्य व्याख्यानं काव्यादर्शस्य प्रथमपरिच्छेदे गुणैः सहैव कृतम् भवति, न तु तस्य दोषप्रकरणस्य तृतीयपरिच्छेदे 'इति दोषा दशैवैते' इत्युल्लेखेन सह कस्यापि सम्बन्धस्यावसर आयाति।

२. तृतीयपरिच्छेदस्य समाप्तावपि काव्यादर्शे निरूपितानां समग्रविषयाणां पुनरपि सङ्ग्रहः कृतोऽस्ति, स एवं वर्तते—शब्दार्थयोः अलङ्क्रिया, सुकरदुष्कराः चित्रमार्गाः, काव्यानाम् गुणा दोषाश्च।[8] अत्र विषय-सूच्यां चित्रमार्गमुक्त्वा गुणदोषयोरुल्लेखः कृत आस्ते,एतदभिधानं काव्यानां दश दोषान्, तथा च तेषामेव स्थितिविशेषेषु गुणरूपत्वं लक्षयति।

---

१. स एव १।४६, व्युत्पन्नमिति गौडीयैर्नातिरूढमपीष्यते।
२. स एव १।५०, इत्यनालोच्य वैषम्यमर्थालङ्कारडम्बरौ।
३. स एव १।६०, इत्यादिबन्धपारुष्यं शैथिल्यं च नियच्छति।
४. स एव १।६३, इति ग्राम्योऽयमर्थात्मा वैरस्याय कल्प्यते।
५. स एव १।६६, अनिष्ठुराक्षरप्रायं सुकुमारमिहेष्यते।
६. स एव १।७३, अर्थव्यक्तिरनेयत्वमर्थस्य........।
७. काव्यालङ्कारः (भामहः) १।३५-५६
८. काव्यादर्शः ३।१८६

शब्दार्थालङ्क्रियाश्चित्रमार्गाः सुकरदुष्कराः।
गुणा दोषाश्च काव्यानामिह संक्षिप्य दर्शिताः॥

अत्रेदमवधार्यते । काव्यादर्शे मार्गस्य, तस्य प्राणभूतानां गुणानां च विवेकः प्रथममभीष्टः, ग्रन्थारम्भे चैष उपदेशो वर्तते किन्तु तृतीय-परिच्छेदस्य समाप्तौ प्रदत्तसूच्यां मार्गस्य गुणस्य च नामनी न निर्दिष्टे भवतः । प्रथमपरिच्छेदस्य उपक्रमेषु ग्रन्थकारोऽभिरुचिपूर्वकं मार्गस्य नाम मुहुर्मुहुः प्रस्तौति, तद्यथा—'वाचां विचित्रमार्गाणां निबबन्धुः क्रिया-विधिम्' (१।९), 'अस्त्यनेको गिरां मार्गः' (१।४०), 'इति मार्गद्वयं भिन्नं तत्स्वरूप-निरूपणात्' (१।१०१) ।

न च तृतीयपरिच्छेदस्य समाप्तौ सूच्यां शब्दालङ्कार-निर्देशेन मार्गस्य गुणानां च बोधो ग्रहणं वा भवति, यतो दण्डिनः काव्यादर्शस्य प्रथम-द्वितीयपरिच्छेदयोः न कुत्रापि शब्दार्थविभागेन अलङ्काराणां वर्गीकरणं कृतमस्ति, सत्यं त्वेतद् यत् स्फुटरूपेण ग्रन्थकारः मार्गविभागार्थम् अलङ्क्रियायाः (काश्चिन्मार्गविभागार्थमुक्ताः प्रागप्यलङ्क्रियाः, २।३), वाचां चालङ्काराणाम् (इतिवाचामलङ्कारा दर्शिता पूर्वसूरिभिः २।७) निर्देशं विदधाति, यो निर्देशो गुणान् अलङ्कारान् च बोधयति । अलङ्काराणां शब्दार्थमूलकवर्गीकरणं दण्डिनः परवर्तिभामहस्य काव्यालङ्कारे प्रथमं दृग्गोचरो भवति ।[1]

अतएव काव्यादर्शे तृतीयपरिच्छेदस्य समाप्तौ निरूपितविषयाणां सूची ग्रन्थारम्भे निर्दिष्ट-विषयेभ्यः स्फुटत्वेन अन्यैव अस्ति, अन्यस्य ग्रन्थकारस्य च वर्तते ।

३. काव्यादर्शस्य द्वितीयपरिच्छेदसमाप्तौ द्वे कारिके ग्रन्थस्य समाप्तिं बोधयतः, एका कारिका निरूपितविधाभ्योऽन्यत्सर्वाणि विधा-वैशिष्ट्-

---

१. काव्यालङ्कारः (भामहः) १।१५

शब्दाभिधेयालङ्कारभेदादिष्टं द्वयं तु नः ॥

यानि अलङ्कारत्वेनैव स्वीकरोति,[१] द्वितीया कारिका अलङ्काराणां समग्रव्याख्यानस्यासम्भवात् तेषां विशदीकरणाय अभ्यासं निर्दिशति ।[२] ग्रन्थारम्भे निर्दिष्टविषयेषु अलङ्कार एवान्तिमः प्रतिपाद्य आस्ते—तैः शरीरं च काव्यानामलङ्काराश्च दर्शिताः (१।१०), अत एवालङ्कारान् उक्त्वा निष्कर्षशिक्षां च दत्त्वा ग्रन्थः समाप्तिमगमत् ।

४. तृतीयपरिच्छेदस्योपसंहारकारिकायां वाणी मदिरेक्षणया युवत्या सह उपमीयते, तथा च स्वयमागतया युवत्या इव वशवर्तिन्या वाण्या सह रमणं समाजे कीर्तिप्राप्तिश्च कवये लाभद्वयं गीयते[३] । एतदभिधानं प्रथमपरिच्छेदस्यान्तिमकारिकाया अभिधानात् प्रायोऽन्यदेव, यत्र ज्ञानेन निरलसाभ्यासेन च दण्डी सरस्वत्या उपासनां निर्दि-

---

१. काव्यादर्शः २।३६७

यच्च सन्ध्यङ्गवृत्त्यङ्गलक्षणाद्यागमान्तरे ।
व्यावर्णितमिदं चेष्टमलंकारतयैव नः ।।

२. काव्यादर्शः २।३६८

पन्थाः स एष विवृतः परिमाणवृत्त्या
संहृत्य विस्तरमनन्तमलङ्क्रियाणाम् ।
वाचामतीत्य विषयं परिवर्तमाना—
नभ्यास एव विवरीतुमलं विशेषान् ।।

३. काव्यादर्शः ३।१८७

व्युत्पन्नबुद्धिरमुना विधिदर्शितेन ।
मार्गेण दोषगुणयोर्वशवर्तिनीभिः ।
वाग्भिः कृताभिसरणो मदिरेक्षणाभिः
धन्यो युवेव रमते लभते च कीर्तिम् ।।

शति, यया उपासनया विदग्धगोष्ठ्यां वक्तुं कविः समर्थो भवति[१]। एकतो वाण्या उपासानाया निर्देशः, अन्यत्र युवत्या इव वाण्या सह रमणम्—इति कथनद्वयं ग्रन्थकारद्वयम् अपेक्षते। कविताया वनितायाश्च समानतां भामहः स्वकाव्यालङ्कारे प्रथमतो निबध्नाति[२] तमेव अनुकरोति काव्यादर्शस्य तृतीयपरिच्छेदस्य कर्ता।

५. काव्यादर्शस्य प्रथमपरिच्छेदे आचार्यो दण्डी अनुप्रासं माधुर्य-गुणस्य पोषकं विधाय, वर्णसंघातस्य आवृत्तिं यमकं नैकान्तमधुरम् उक्त्वा यमकस्य व्याख्यानं तिरस्करोति। तत्रायं कारिकार्धः—'तत्तु नैकान्तमधुरमतः पश्चाद्विधास्यते' (१।६१), अस्येदं तात्पर्यं टीकाकारा गृह्णन्ति यद् यमके निर्भरमाधुर्यस्याभावात् आचार्यः तस्य व्याख्यानं पश्चात्—गुणालङ्कारादिकम् उक्त्वा तृतीयपरिच्छेदे करिष्यति, तृतीय-परिच्छेदे निरूपितं यमकं प्रति आचार्यस्यायं निर्देशः। अत्र द्वौ प्रश्नौ सम्भवतः—(१) कारिकार्धस्य टीकाकारैः कृतोऽर्थः न सम्यग् वर्तते, तत्र टीकाकारा लक्षणकारस्य दण्डिनः स्थितिं स्वदृष्ट्या पश्यन्ति। (२) कारिकायां, यमकस्य यल्लक्षणं विहितं भवति तस्मात् लक्षणात् तृतीयपरिच्छेदे व्याख्यातस्य यमकस्य लक्षणम् भिन्नमस्ति।

कारिकार्धे 'विधास्यते' क्रियायां लृट्लकारस्य प्रयोगोऽभिज्ञावचन-विषयकः ( यथा पूर्वलक्षणकारैः माधुर्यगुणात् यमकं विभक्तम्, तत्स्मृत्य-

---

१. काव्यादर्शः १।१०४,१०५

श्रुतेन यत्नेन च वागुपासिता।
तदस्ततन्द्रैरनिशं सरस्वती श्रमादुपास्या खलु कीर्तिमीप्सुभिः।
कृशे कवित्वेऽपि जनाः कृतश्रमा विदग्धगोष्ठीषु विहर्तुमीशते॥

२. काव्यालङ्कारः (भामहः) १।१३, ३।५८

न कान्तमपि निर्भूषं विभाति वनिताननम्।
अनेन वागर्थविदामलङ्कृता
विभाति नारीव विदग्धमण्डना।

र्थम् ) भूतकालार्थे[1] प्रयुक्तो वर्तते । एवं यमकस्य तदानीं कविसमाजे यथास्थिति-निदर्शनं कारिकायां भवति, तथा च कारिकार्धस्यैवं विधोऽर्थः युक्ततमः प्रतिभाति - 'गुणप्रयोगे वर्णसंघातगोचरावृत्तिरूपं यमकं नैकान्ततो मधुरं भवति अतः पूर्वलक्षणकारैः तस्य निरूपणं पश्चात् (अनभिमतरूपेण) कृतमस्ति, नात्र तन्निरूप्यते ।' पश्चात् शब्दस्य द्वौ अर्थौ भवतः—(१) पश्चिमदिक् (२) चरमः ।[2] अत्र पश्चिमदिशो लक्षणया अनभिमत-अर्थः गृह्यते ।

प्रथमपरिच्छेदे यमकस्येदं लक्षणम् अस्ति-

'आवृत्तिं वर्णसंघातगोचरां यमकं विदुः ।' (१।६१)

तृतीये परिच्छेदे लक्षणे प्रकारान्तरम् आयाति—

'अव्यपेतव्यपेतात्मा व्यावृतिर्वर्णसंहतेः ।
यमकं तच्च ... ... ॥' (३।१)

अत्र प्रथमलक्षणाद् द्वितीयलक्षणे नियमविस्तारोऽस्ति । तेन प्रकटीभवति लक्षणद्वयस्य परस्परं भिन्नता । अतः प्रथमपरिच्छेदे कृतयमकनिर्देशस्य तृतीयपरिच्छेदे निरूपितयमकेन सह विवेको नोचितः ।

६. काव्यादर्शस्य मद्रासप्राच्यसंशोधनमन्दिरसंस्थायाः प्रतौ, एम्० रङ्गाचार्येण सम्पादितप्रतौ च प्रहेलिका निरूपणेन सह तृतीयपरिच्छेदस्य समाप्तिर्गता, तत्र समाप्तिसूचिकाः कारिकाः सन्ति[3], पुनः नूतनविषययोः काव्यगुणदोषयोः निर्देशेन चतुर्थपरिच्छेदस्य उपक्रमो भवति[4] । एतेन प्रकटीभवति यद् गुणदोषनिरूपणस्य नूतनः परिच्छेदः

---

१. अष्टाध्यायी ३।२।११२ अभिज्ञावचने लृट् ।

२. अमरकोशः ३।३।२४३ प्रतीच्यां चरमे पश्चात् ।

३. द्रष्टव्य : प्रभाटीकायुक्तः काव्यादर्शः, पृ० ३७३—३७४

४. तत्रैव, पृ० ३७४

काव्ये दोषगुणाश्चैव विज्ञातव्या विचक्षणैः ।
दोषा विपत्तयस्तस्य गुणाः सम्पत्तयस्तथा ॥

केन विदुषा योजित आसीत् । लक्षणग्रन्थेषु प्रायो निरूप्यविषयाणां सूची ग्रन्थारम्भे निबद्धा दृश्यते, अत्र विषयाणां नूतन उपक्रमः क्षेपकमेव प्रमाणीकरोति । तथा च यमकचित्रबन्धप्रहेलिकानां क्षेपकस्य कर्त्ता कश्चिदेकः, काव्यदोषगुणयोः क्षेपकस्य कर्ता अन्यः कश्चित् । एवं चतुः-परिच्छेदात्मकस्य काव्यादर्शस्य त्रयः कर्त्तारः सम्भाव्यन्ते ।

## भाषावृत्तिगतभेदः

७. काव्यादर्शस्य प्रथमपरिच्छेदस्य कर्ता वैदर्भमार्गस्य कविः, दाक्षिणात्यकविसम्प्रदायस्य चाभिमानी दृश्यते, तदनुरूपमेव प्रथम-द्वितीयपरिच्छेदनिबद्धासु कारिकासु वयं कवि-सुलभप्रौढता, सहजबोधं, भाषाप्रवाहं, लालित्यं चानुभवामः, नैतद्वैशिष्ट्यं तृतीयपरिच्छेदस्य कारिकासु लक्षयामः।

यद्यपि तृतीयपरिच्छेदे यमक-चित्रबन्ध-प्रहेलिका-काव्यदोषाणाम् उदाहरणेषु कविप्रौढताया लालित्यस्य च न युक्तावसरः, तथापि विषय—व्याख्यात्रीषु कारिकासु तदवसरस्तु अस्त्येव, तत्र लालित्यस्य अपेक्षा वर्तते प्रथमपरिच्छेदे कारिकालालित्यदर्शनात् । किन्तु लालित्यस्य निबन्धनं तु दूरेऽस्तु तत्र तृतीयपरिच्छेदे छन्दोभङ्गमपि पश्यामः —

> इति पादादियमकविकल्पस्येदृशी गतिः ।
> एवमेव विकल्प्यानि यमकानीतराण्यपि ॥ (३।३७)

अत्र प्रथमचरणस्य षष्ठो वर्णो लघुरस्ति यावत्स गुरुः अपेक्षितः । नैवं शैथिल्यं प्रथमद्वितीयपरिच्छेदयोः कारिकासु वर्तते । उदाहरणत्वेन प्रथमपरिच्छेदस्य एका सामान्या कारिका द्रष्टव्या —

> इति तस्य प्रभेदौ द्वौ तयोराख्यायिका किल ।
> नायकेनैव वाच्यान्या नायकेनेतरेण वा ॥(१।२३-२४)

या एषा शैथिल्य-विहीना श्लेषगुणसम्पन्ना वर्तते ।

## एकस्यैव वर्ण्यविषयस्य स्वरूपे भेदः

८. प्रथमपरिच्छेदेऽर्थव्यक्तिगुणस्योदाहरणत्वेन वराहवर्णनम् आचार्यः करोति—

अर्थव्यक्तिरनेयत्वमर्थस्य हरिणोद्धृता ।
भूः खुरक्षुण्णनागासृग्लोहितादुदधेरिति ।।
मही महावराहेण लोहितादुद्धृतोदधेः ।
इतीयत्येव निर्दिष्टे नेयत्वमुरगासृजः ।। (१।७३-७४)

एतद्वर्णनं दण्डिना ताः प्रतिमाः दृष्ट्वा कृतमासीत् याः तदानीं तस्य समक्षं निर्मिता भवन्ति स्म ।

तृतीयपरिच्छेदे पुनः वराहस्य एतद्भिन्न वर्णनं वर्तते—

उद्धृत्य राजकादुर्वी ध्रियतेऽद्य भुजेन ते ।
वराहेणोद्धृता यासौ वराहेरुपरिस्थिताः ।। (३।२५)

तृतीयपरिच्छेदस्यैतद्वर्णनं साम्राजा चन्द्रगुप्तविक्रमादित्येन (ईस्वी ४०० तमे वर्षे) उदयगिरिगुहायां[1] निर्मितां प्रतिमां तत्कल्पनां वानुकरोति ।

एवमेकस्यैव वर्ण्यवस्तुनः ऐतिहासिकनिकषे द्विप्रकारता लेखकद्वयस्य सङ्केतो भवति ।

## विधाया नैकान्तमधुरेण प्रकारान्तरेण प्रस्तुतीकरणम्

९. आचार्यदण्डिमतेन श्रुत्यनुप्रासो रसावहो भवति[2] (द्रष्टव्यः प्रथमपरिच्छेदे माधुर्यगुणविवेचनप्रसङ्गः), वर्णसमूहस्य आवृत्तिं यमकमपि च आचार्यः श्रुत्यनुप्रासमिव माधुर्यगुणस्य पोषकं न स्वीकरोति[3] । माधुर्यं लक्षयित्वा यमकं तिरस्करोति, किन्तु तृतीय-परिच्छेदे स्थान-नियमगतचित्रबन्धे[4] श्रुत्यनुप्रासस्यैव प्रकारान्तरं माधुर्यदृष्ट्या विकृतं

१. द्रष्टव्यम्—भारतीय इतिहास का उन्मीलन पृ० २१६
२. काव्यादर्शः १।५२
३. स एव १।६१
४. स एव ३।८२

प्राक् सम्भवति, माघस्य 'शिशुपालवधे' महाकाव्ये प्रयुक्ताः सर्वे चित्रप्रकाराः काव्यादर्शस्य तृतीयपरिच्छेदे न निरूपिताः सन्ति, एतेनानुमीयते तृतीयपरिच्छेदस्य रचनानन्तरमेव माघः 'शिशुपालवधम्' विरचितवान्। एवं च दशकुमारचरितस्य रचयिता दण्डी मूलकाव्यादर्शस्य कर्त्ता दण्डी भवितुं नार्हति।

काव्यादर्शस्य लोकप्रियतां दृष्ट्वा कश्चित् काव्यगोष्ठी-मर्मज्ञः कविर्विद्वान् वा तं ग्रन्थं सर्वाङ्गं कर्तुं मनसि निधाय चित्रमार्गस्य काव्यदोषस्य च निरूपणं योजयित्वा तृतीयपरिच्छेदम् निबबन्ध। स कलानाम् विवेकाय चतुर्थं कलापरिच्छेदमपि योजयितुम् उत्साहं विदधौ, कलापरिच्छेदं योजितवानेव आसीत् वा, यथा कलाविरोधविषयनिरूपणे तेन सङ्केतो दीयते,[1] किन्त्विदानीं स परिच्छेदो नोपलभ्यते।



---

१. काव्यादर्शः ३।१७१

इत्थं कलाचतुःषष्टिविरोधः साधु नीयताम्।
तस्याः कलापरिच्छेदे रूपमाविर्भविष्यति॥

श्री श्रीकृष्णमणि त्रिपाठी

# भारतीयदर्शनसिद्धान्तसमीक्षणम्

मानवजीवनं हि दुःखबहुलमेवास्ति। अतएव भारतीयदर्शनेन दुःखस्यास्तित्वमङ्गीकृत्य तदपाकरणाय बहुभिर्विद्वद्भिः अनेके उपायाः प्रतिपादिताः सन्ति। भगवता बुद्धेन दुःखदूरीकरणाय सम्यक्संकल्प–सम्यग्वचन–सम्यक्कर्मान्त–सम्यग्व्यायाम–सम्यक्स्मृति–सम्यक्समाधिरूपा अष्टावुपायाः प्रदर्शिताः। योगवासिष्ठं तु भगवतो रामस्य दुःखापनोदनायैव निर्मितम्। राजा दशरथेन यदा श्रुतं यद्रामोऽहर्निशं दुःखानि चिन्तयन् सदोदासीनस्तिष्ठति तदा तेन स कुलगुरवे वसिष्ठाय दुःखदूरीकरणाय समर्पितः। तदनन्तरं तेन दुःखस्य कारणं जगति राग एव, अज्ञानेन दुःखं जायते ज्ञानेन च तन्निवृत्तिरित्यादिकं समुपदिश्य रामस्य विषादो दूरीकृतः। श्रीमद्भगवद्गीताया आरम्भोऽपि अर्जुनविषादापनोदनायैव जातः। पूर्वमीमांसामते संसारो दुःखमयः, सुखस्य धाम तु स्वर्ग एवास्ति—

यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम्।
अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम्॥

अतएव तदुपलब्धये तत्र 'स्वर्गकामो यजेत' इत्यादिना यज्ञसम्पादनाद्युपदेशः संगच्छते। न्यायदर्शननये संसारो दुःखबहुलः, मिथ्याज्ञानमेवास्ति तन्मूलं, तन्निवृत्तये एकमात्रमुपायश्च प्रमाणप्रमेयादिषोडशपदार्थानां यथार्थज्ञानोपलब्धिरेव। वैशेषिकदर्शनमते तु दुःखस्यात्यन्तिकनिवृत्तिरेव निःश्रेयसं तत्प्राप्तिश्च सप्तपदार्थतत्त्वज्ञानादेव भवति। सांख्यदर्शनं तु प्राणिमात्रमाध्यात्मिकाधिभौतिकाधिदैविकत्रिविधदुःखाभिभूतमेव मनुते, तन्मते दुःखस्यात्यन्तिकनिवृत्तिरेव परमपुरुषार्थः, तत्साधनं तु प्रकृतिपुरु-

षादिपञ्चविंशतितत्त्वज्ञानमेव। योगदर्शनं तु सांख्यदर्शनस्य पञ्चविंशतितत्त्वानि स्वीकुर्वन् षड्विंशतितममीश्वरतत्त्वं स्वीकरोति, तन्मते प्रकृतिपुरुषसंयोगाद् दुःखं तद्वियोगाच्च कैवल्यं जायते। योगदर्शनानुसारमात्मा स्वच्छस्फटिक इव निर्मलोऽस्ति। न तत्र दुःखादि सम्भवति। किन्तु जपाकुसुमसान्निध्यात् स्वच्छे स्फटिके रक्तापराग इव स्वचित्तवृत्त्या सह सम्बन्धेन तत्र दुःखं जायते। अतो योगप्रक्रियया चित्तवृत्तिनिरोधात् पुरुषस्य स्वस्वरूपेऽवस्थानेन दुःखस्य भानं न भवति। वेदान्तदर्शनसिद्धान्तानुसारं जीवब्रह्मणोः पार्थक्यमज्ञानं भ्रमो वा प्रोच्यते। वस्तुतः तयोः पार्थक्यं नास्ति. किन्तु भ्रमात् पार्थक्यं प्रतीयते। मायैव दुःखस्य मूलं, तन्निवारणं ब्रह्मज्ञानादेव भवति। यथा दर्शनेष्वेतेषु दुःखापनोदाय विभिन्ना उपायाः प्रदर्शिताः तथैव श्रीमद्भागवते दुःखनिवृत्तये भक्तिज्ञानविरागादीनि साधनानि निर्दिष्टानि सन्ति।

अद्वैतवेदान्तस्य प्रधानाचार्याणां भगवत्पूज्यपादश्रीशङ्कराचार्याणां मते केवलं ब्रह्मैव सत्यमस्ति तदतिरिक्तं सर्वं दृश्यप्रपञ्चं मायिकं भ्रमो वा 'ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः।' ब्रह्मज्ञानोदयेन दृश्यप्रपञ्चस्य निषेधादखण्डं चिन्मयमेकरसमद्वितीयं ब्रह्मैवावशिष्यते। ते परमार्थदृष्ट्या ब्रह्म निर्गुणं, व्यावहारिकदृष्ट्या च सगुणं स्वीकुर्वन्ति। विशिष्टाद्वैतसम्प्रदायप्रवर्तकाः श्रीरामानुजाचार्याः सगुणमेव ब्रह्म मन्यन्ते न निर्गुणम्। तन्मते ब्रह्म चिदचिद्विशिष्टमस्ति जीवजगती च ब्रह्मण एव शरीरे स्तः। यतो हि ब्रह्मणः तत्कार्यं च भिन्नं नास्ति। अतएव ब्रह्म विशेष्यं ते च विशेषणे। विशेष्यञ्च विशेषणेन सहैव सम्बद्धं तिष्ठति नासम्बद्धम्। अतः चिदचिद्विशेषणाभ्यां सम्बद्धतया ब्रह्म विशिष्टाद्वैतमुच्यते। एते महानुभावाः ब्रह्मणः जीवं जगच्च भिन्ने स्वीकुर्वन्ति। चिदचिदीश्वराणां संयोग एव ब्रह्म। अतएव—

एतज्ज्ञेयं नित्यमेवात्मसंस्थं नातः परं वेदितव्यं हि किञ्चित्।
भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं विविधं ब्रह्म चैतत् ॥१।१२

इति श्वेताश्वतरोपनिषत् संगच्छते।

द्वैतसम्प्रदायाचार्याः श्रीमध्वाचार्याः द्वे एव तत्त्वे अङ्गीकुर्वन्ति–एकं स्वतन्त्रं तत्त्वं द्वितीयञ्चास्वतन्त्रम् । अशेषकल्याणगुणगणाकरो भगवान् विष्णुः स्वतन्त्रं तत्त्वमस्ति, जीवो जगच्च स्तः अस्वतन्त्रे तत्त्वे । अतो जीवजगती भगवदधीने स्तः । श्रीरामानुजाचार्यमते ईश्वर एव जगद्रूपेण परिणमते परं मध्वाचार्यमते जीवजगद्भगवतां पार्थक्यं नित्यमस्ति । तन्मते भगवान् नियामकः नियम्यश्चास्ति जीवः । द्वैताद्वैतसम्प्रदायप्रवर्तकाना श्रीनिम्बार्काचार्याणां मते जीवजगती उभे अपि ब्रह्मपरिणामभूते स्तः । ब्रह्मैव जीवजगतोरुपादानं निमित्तञ्च कारणम् । एते ब्रह्म सगुणं निर्गुणञ्च मन्यन्ते ।

विशुद्धाद्वैतसम्प्रदायाचार्याणां श्रीवल्लभाचार्याणां मते नित्यसच्चिदान्दस्वरूपो भगवान् सर्वविरुद्धधर्माणामाश्रयः स्वीकृतोऽस्ति । एतन्मते निर्गुणोऽपीश्वरः सगुणः, निराकारोऽपि साकारः, अगम्योऽपि सुगमः स्वीक्रियते । न तत्र किञ्चित् परिणामो भवति । स शुद्धः सच्चिदानन्दस्वरूप एव । वलभाचार्यो हि जीवब्रह्मणोः नितान्तमैक्यं स्वीकरोति । अतो मायाशवलब्रह्मपक्षपातिनः शाङ्करवेदान्तात् स्वमतस्य पार्थक्यप्रदर्शनाय तेन अद्वैतात्प्राक् शुद्धशब्दं व्यवहरता स्वकीयं मतं शुद्धाद्वैतमिति नाम्ना व्यवहृतम् । तथा चोक्तं शुद्धाद्वैतमार्तण्डे—

मायासम्बन्धरहितं शुद्धमित्युच्यते बुधैः ।
कार्यकारणरूपं हि शुद्धं ब्रह्म न मायिकम् ॥

वल्लभाचार्यमतेऽखिलरसामृतमूर्तिर्लीलापुरुषोत्तमो भगवान् श्रीकृष्ण एव परं ब्रह्मास्ति । तदनुग्रह एवैकं सर्वश्रेष्ठं साधनमस्ति । तदर्थं तच्छरणागतिरेव श्रेयस्करी ।

अतएव तेन नवरत्ने सिद्धान्तितम्—

तस्मात्सर्वात्मना नित्यं श्रीकृष्णः शरणं मम ।
वदद्भिरेव सततं स्थेयमित्येव मे मतिः ॥

हरिरायोऽपि

नाश्रितो वल्लभाधीशो न च दृष्टा सुबोधिनी।
नाराधि राधिकानाथो वृथा तज्जन्म भूतले ॥

तस्माद्वल्लभाचार्यमते सांसारिकदुःखनिवृत्तये सर्वोत्तमः सरल उपायो भगवद्भक्तिरेवास्ति ।

एवं तत्तद्दर्शनेषु जगत्कर्तृत्वमपि विभिन्नं स्वीकृतमस्ति । न्यायवैशेषिकदर्शने ईश्वरं जगत्कर्तारमङ्गीकुरुतः । योगदर्शनं सेश्वरसांख्यदर्शनञ्च पुरुषविशेषमेव संसारोत्पादकं स्वीकुरुतः । निरीश्वरसांख्यमते प्रकृतिरेव कर्त्री पुरुषस्तु पुष्करपलाशवन्निर्लेपः । वेदान्तदर्शनं तु ब्रह्मण एव विवर्तं जगदिति मनुते । वेदान्तदर्शनस्य ब्रह्म श्रीमद्भगवद्गीतायाः पुरुषोत्तमः श्रीमद्भागवतस्य च श्रीकृष्ण एकमेव परमं तत्त्वमस्ति—

वदन्ति तत्तत्त्वविदः तत्त्वं यज्ज्ञानमद्वयम् ।
ब्रह्मेति परमात्मेति भगवानिति शब्द्यते ॥ श्री० भा०१।२।११

एवं दर्शनानि अनेकैः रूपैर्भासमानस्य प्रपञ्चस्यास्य मूले एकस्य सर्वशक्तिमतः तत्त्वस्य सत्तां स्वीकुर्वन्ति, येन समस्तमिदं विश्वं व्याप्तमस्ति। तदेव विष्णुपुराणनारदीयपुराणादिषु विष्णुरूपेण, श्रीमद्भागवतब्रह्मवैवर्तादिपुराणेषु श्रीकृष्णरूपेण, वायुशिवस्कन्दादिपुराणेषु शिवरूपेण, देवीभागवतादिषु शक्तिरूपेण च स्तूयते । अतो दर्शनानुसारं भगवत्स्वरूपसाक्षात्कारमन्तरा न किमप्यस्ति वास्तविकं सुखम् ।



धनिनः प्रति

**गङ्गां च धारयति मूर्ध्नि सदा कपाली**
**सा तस्य चुम्बति मुखं न कदाचिदेव।**
**रत्नाकरं प्रति चुचुम्ब सहस्रवक्त्रै—**
**र्गङ्गादयो युवतयः सधनानुकूलाः ॥**

# देव्या विविधदर्शनम्

विद्याभूषण: पण्डित गणेशराम शर्मा



कवेः कलितकल्पना ललितवाङ्मयाह्लादिनी
मनोज्ञमृदुला सुधारससरस्वती भारती।
प्रमोदमधुवर्षिणी भुवनमोहिता श्रीः स्वयं
महामहिषमर्द्दिनी मयि करोतु सानुग्रहम्।

प्रयच्छतु परां मुदं च सुखशान्तिमाध्यात्मिकीं
स्थितिं समधिकल्पतामविचलां परब्रह्मणि,
निरस्य बहिरन्तरोद्गतविकारवेगान् मनो–
महामहिषमर्द्दिनी दृढय मे स्थितप्रज्ञताम्।

तनुज्वलननिर्गतोर्ध्वबहुधूमराशेस्तमः––
कपोतरुचिकर्बुराङ्गललिता च धूमायती,
प्रकाशयतु पुण्यपुञ्जमहसोज्ज्वलाभा द्रुतं
महामहिषमर्दिनी मदमलीमसं मे मनः।

यदीयरचनाञ्चले जगदिदं विकाशोन्मुखं
निसर्गरमणीयतां वहति नामरूपात्मकम्,
नटीगुणपटीयसी विविधभाववस्तुक्रिया—
श्रयं महिषमर्द्दिनी दिशतु विश्वरङ्गे फलम् ।

भक्तार्तिप्रशमनि ! भद्रपीठसंस्थां
भास्वन्तीमथ तपसा विभूतिदात्रीम्,
भीतिघ्नां नभसि नटीमिवोन्नटन्तीं
भूयोऽहं मनसि भजामि भद्रकालीम् ।

शब्दार्थध्वनिविशदां ललामलेखां
दिव्यां सद्गुणगणगुम्फनाच्छशैलीम्,
साकारां त्रिभुवनसुन्दरीं स्वभाषा—
विज्ञानाक्षरलिपिनागरीं नमामि ।

हस्ताब्जेऽमृतकलशं समुद्वहन्ती—
मन्यस्मिन् रुधिरघनं च पूर्णपात्रम्,
त्वां कण्ठीरवकृतवाहनां श्रयेऽहं
कूष्माण्डां भगवति ! सायुधाष्टहस्ताम् ।

सर्वस्वावधिकृतनिर्निमित्ततृष्णा—
त्यागश्लाघितयशसां महामुनीनाम्,
प्राज्ञानां मनसि च वीतरागवृत्तिं
जानेऽम्बां शुभगतिमूर्ध्वरेतसां त्वाम् ।

येषामात्मनि तव भक्तियोगलभ्या
सौम्याविर्भवति गुणप्रसन्नमूर्तिः,
ते सृष्ट्युद्भवलयरक्षणक्षमास्ते
प्रत्यक्षीकृतसकलार्थगूढतत्त्वाः ।

स्वप्राणाहुतिबलदीप्तदिव्यतेजो-
ज्वालामालिनि शलभान् रिपून् दहन्तीम्
क्रोधाग्नौ खररणरौद्रभीषणां त्वां
वन्देऽहं सुभटशिरोमणेः प्रतिज्ञाम् ।

मत्तोच्छृङ्खलखलराज्यविप्लवानां
दस्यूनां दलदमनाय कूटनीतिम्,
चित्सङ्घर्षणगुणभेदमूलवृत्तिं
देवीं त्वामहमनुयाम्यनाद्यविद्याम् ।

त्वां स्वान्तःसुखपरनिवृत्तिप्रमाणां
गूढग्रन्थितसरहस्यतत्त्वसूत्राम्,
शास्त्रेष्वात्मनि च समन्वयातिरेक-
प्रौढां दर्शनपथपद्धतिं श्रयेऽहम् ।



डॉ० रामेश्वरप्रसाद मिश्रः

# आदिवासिनां सामान्यजीवनम्

विभिन्न-जाति-वर्ग-सम्प्रदाय-संस्कृतिसमाकुलेऽस्मिन् भारतवर्षे मध्यप्रदेशस्थितदक्षिणभूभागस्य कान्तारप्रायतया नाद्यावधि तत्र श्रेष्ठाधुनिकसभ्यतायाः साधुप्रसारो जातः। दण्डकारण्यस्थितभयावहगहनतमदुर्गमवनस्थलीषु बहवो मानवाः विकाशस्य प्रथमसोपानबीजमिवादिवासिपदेनाहूयमानाः सभ्यतायाश्चास्मिन् युगे सर्वविधसुविधाप्रदानबद्धपरिकरेऽपि शासने वन्यजीवाऽव्यतिरिक्तं जीवनं धारयन्तो निवसन्ति। तेषु च मुरिया-मारिया-भतरा-गोंड़-धाकड़प्रभृतयो विभिन्नवर्गजातीयादिवासिनः प्रधानरूपेण सन्ति। यातायातसाधनशून्यानि माड़पदेनाभिधीयमानानि बहूनि खलु स्थानानि तत्राद्याप्यतादृशानि सन्ति यत्र तरुमूलेषु शाखासु वा स्वेच्छया नग्नकलेवरा लज्जादिमानवसुलभभावनाहीनाः शतशो मानवाभिधेयाः वन्यमूलफलपत्रादिभिर्वन्यपशुमांसैर्वा स्वोदरपोषणं सुखेन कुर्वन्तोऽग्निशरणाः वृक्षत्वगवनद्धशरीराः विवस्त्राः वा गोंड़ी-हलवीत्यादिभाषाभाषिणः श्रीदन्तेश्वरीदेवीसहायाः जीवन्ति नाम। एतेषां हृदि भूतप्रेतादिदेवातिरिक्तं श्रीदन्तेश्वरीदेवीं प्रति महती श्रद्धा निवसति। प्रायः स्वाराध्यदेवानामाराधनेनैव रोगाणां शान्तिमपि कर्तुमेते प्रयतन्ते। एतेषां जीवनोपयोगिवस्तूनामावश्यकतासु महन्न्यूनता दृष्टिगोचरीभवति। वनस्थाः पुरुषाः स्त्रियश्च वल्कलेनैव कटिप्रदेशमाच्छादयन्ति। पत्रपुटकैर्मृत्तिकाविनिर्मितपात्रैर्वा जलपानभोजनग्रहणादिव्यवस्था सम्पादिता भवति। प्रायः सलवणं जलपूरितपक्वौदनमेवैतेषां प्रियमन्नभोजनं भवति। तज्जलप्रायमोदनन्ते 'पेज' इति शब्देन व्यवहरन्ति। मड़ियानामकवन्यान्नेनापि चेतन्निर्मीयते।

मासांदिनस्त्वेते धनुर्बाणधारिणस्स्वभावत एव भवन्ति । केचन तृणाच्छादनप्रायाणि गृहाणि तरुमूलेषु निर्माय तत्रैकाकिन एव निर्भया निवसन्ति । सामूहिकावासप्रणालो प्रायो नैतेषु दृश्यते । कतिपयावासानां मध्ये प्रायः बहिर्भागे घोटुलनाम्नाख्यात कुमारगृहं भवति यत्र सायं काले सर्वे खल्वविवाहितयुवकाः युवतयश्च सम्मिलय तत्राग्निं च प्रज्वाल्य गायनवादनानन्दमग्नाः निशायाः पूर्वार्धं यापयन्ति । तत्रैव च स्वेच्छया शयानाः निशां नयन्ति । गृहे केवलं विवाहितजनाः एव निवसन्ति । प्रायः कुमारगृहावाससमुत्पन्नस्नेहेनैतेषां गान्धर्वविवाहरीत्या विवाहोऽपि सम्बन्धिजनानुमोदनेन सोत्साहं सम्पादितो भवति ।

वनितानां प्रसवसमये प्रायः पुरुषा एव सहायतां कुर्वन्ति । तस्मिन् समये स्वच्छतादिसम्पादनविहीनाः प्रकृतिक्रोडासीनाः जगदीश्वरानुकम्पयैव जीविताः निवसन्ति । शीतोत्पन्नदोषनिवारणाय मदिरायाः प्रयोग एवादिवासिनां महौषधिरूपेण श्रेयस्करो भवति । न खल्वेते जानन्तिस्म यत् गोदुग्धं मनुष्याणां कृते पौष्टिकपेयमस्ति । पूर्वं गोदोहनमेव नाकुर्वन् किन्तु शनैः शनैः बहिःप्रदेशागतसभ्यजनानां सम्पर्केणेदानीं गोदोहनं दुग्धादिविक्रयणञ्च लाभबुद्ध्या कुर्तुमारब्धवन्तः । विना दुग्धेनैव चायात्मकपेयस्योपयोग अद्यावधि वनस्थादिवासिषु दृश्यते । प्रत्युटजमग्न्यागारमिव रात्रिन्दिवं वह्निः प्रज्वलितो दृष्टिपथमायाति । रात्रौ च सर्वे परिवारसदस्याः प्रज्वलितवह्निमभितः यथोपलब्धवेणुप्रस्तरणे तृणपुलके वा लघुवस्त्रेणात्मानमाच्छाद्य मुनय इव शयिताः सुखेन निद्रां प्राप्नुवन्ति । न खल्वेतेऽसत्यभाषणं कुर्वन्ति । किन्तु कोपानलपूर्णमूर्तयः स्वल्पेनैव कारणेन निःशङ्कं मातरं पितरमन्यं वा यथासन्निहितपरशुप्रहारेण कीनाशनिकेतनातिथिं विदधति । कृतेऽपि महापातके न तेषां चित्ते कापि खिन्नता विभीषिका वा समुत्पन्ना भवति । व्यवहारन्यायालये स्वीयमपराधमनायासेनैवाधिकारिणां समक्षे स्वीकुर्वन्ति । तेषां कृषिकर्मणि केवलं धान्यमेव भवति । गोधूमादिसमुत्पादनयोग्यात्र भूमिर्नैवास्ति । कृषिकार्येऽपि वनितानामेवाधिकसहयोगोऽपेक्षितो दृश्यते ।

करपट्टिकानां भोजनं नैतेषां कृते रुचिकरं पथ्यं वा भवति। आदिवासियुवकाः सर्वे खल्वाखेटप्रिया भवन्ति । रात्रिन्दिवं मांसादिनस्तावदेते घोरकान्तारेषु बाणेनव वन्यपशून् विनिघ्नन्ति ।

वनितासु लौहकांस्यरजतसुवर्णाभरणधारणस्य प्रचलनमस्ति । एताः नासिकापुटोपरि पुष्पाकारं सौवर्णमाभरणं धारयन्ति । एते खल्वेवं विनोदप्रियाः भवन्ति यत् सम्बन्धिनां मरणेऽपि तत्कालमेव तन्मरणजन्यदुःखं विस्मरन्ति । नर्तनं गानं वाद्यं पानञ्चैतेषां जीवनेन सहेत्थं सम्मिलितमस्ति यत् यस्य कस्यापि मरणसमयेऽपि सम्मिलय एते वादननर्तनपरायणाः भवन्ति । माटियाजातिषु पुरुषस्य स्त्रियो वा मरणे क्रमशः वृषभं गां वा हत्वा प्रसादमिव तन्मांसं स्वीकुर्वन्ति । निखिलगृहस्थकार्यसम्पादनभारः प्रायः स्त्रीजातिषु तिष्ठति । ताः एव लाङ्गलप्रवहणादिकृषिकार्यं कुर्वन्ति । गृहस्थाश्रमसंचालनायावश्यकविविधवस्तूनां संग्रहार्थं प्रयत्नपराः भवन्ति । पुरुषास्तु प्रायः क्रूरकर्माणो मृगयाव्यापारेण, काष्ठादिसंचयकार्येण वा दिवसं यापयित्वा रात्रौ मदिरापानप्रमत्तास्त्यक्तमानवीयसत्स्वभावाः स्वाधीनीकृतद्वित्रिवनिताभिः साकं पशव इव, पुरुषादा इव, किन्नरा इव, विटा इव, सेवका इव यथासन्तोषमाचरणमाचरन्तो निशां क्षणमिव नयन्ति । यदाकदा समस्तरात्रि विशालतममृदङ्गानुकारि वादनं वादयन्तः स्वशिरसि पशुशृङ्गमाबद्ध्य वराटिकाखचितविभिन्नवर्णरञ्जितवस्त्रेण वक्षःस्थलं कटिप्रदेशञ्चाबद्ध्य सामूहिकरूपेण स्वकीयभाषया रागानुसारं गायन्ति । सहैव विकसन्नवयौवनारुणिमप्रभालावण्येन मांसलितसुगठितावयवसौभाग्यसौन्दर्येणानायासं यूनां मनांसि स्ववशीकुर्वन्त्यः, स्मितसंदृश्यमानधवलदन्तावलीव्याजेन स्वहृदयस्थितनिश्छलसारल्यमिव दर्शयन्त्यः, वराटिकाविरचितलम्बायमानमालया शोभमानं नवोदीयमानकोरकानुकारिवक्षोजसौभाग्यसमुल्लसितं वक्षःस्थलं मुहुर्मुहुः लघूत्तरीयाञ्चलेन गोपयन्त्यः, समुद्धतापूर्वनर्तनोत्कम्पमानवक्षःस्थललुलितहारपतनोत्पतनव्याजेन नवोन्मिषितेन्दीवरसौरभसमाकृष्टगुञ्जायमानमधुकरानिव युवजनान् रसास्वादायाह्व-

यन्त्यः, सुवासिततैलावसिक्तशिरोधराप्रदेशस्पृष्टसीमन्तितकृष्णकेशपाशं मल्लिकादिनवकुसुममालिकया कलानुरूपं विभूष्य स्वसौन्दर्यसौभाग्योन्नतहृदयाः, मण्डलाकारमाकारं विरच्य, स्वाभाविकलब्धनर्तनकलाकुशलाः, मधुरं गायन्त्यः, सहैवोत्थितानेकपादसंचारोत्पन्नचारुताचमत्कृतदर्शकलोकाः तन्मयतां गता रमण्यो नृत्यन्ति। अहो खल्वासां नृत्यवादनस्नेहः, ब्रह्मानन्दमिव नर्तनानन्दनिमग्नाः भवन्ति।

कुक्कुटयुद्धमेतेषां हिंसकप्रवृत्तीनामादिवासिनां विशिष्टं विनोदसाधनमस्ति। कुक्कुटस्य दक्षिणचरणे लौहनिर्मितां तीक्ष्णधारां कर्तरिकामाबद्ध्य ते युद्धाय विमुञ्चन्ति। समुत्सुकतापूर्णदर्शककोलाहलसंवर्धितसमुत्साहौ रणक्षेत्रे पादपक्षप्रहारैरन्योन्यमभिप्रहरन्तौ साधुवीराविव घोरयुद्धं कुरुतः। द्वित्रिक्षणानन्तरमेव प्रबलप्रहाराघातस्रवितरुधिरः द्वयोरेकतरः समुद्भ्रान्ततारकः, विजेतृकुक्कुटस्वामिजिह्वालौल्यतुष्टिपूर्वकोदरपूर्त्यर्थं पाञ्चभौतिकं स्वीयं नश्वरशरीरमुत्सृज्य यमसदनातिथिर्भवति। वराकाणां कुक्कुटानां प्राणैर्मनोरञ्जनसाधकानां वनवासिनामेतेषां महान् सन्तोषो भवतीत्यहो व्यामोहः। इमानि कुक्कुटप्राणहरणात्मकानि मेलापकानि कुक्कुटापणनाम्ना प्रसिद्धानि भवन्ति।

वस्तरमण्डलस्य विभिन्नधार्मिकस्थानेषु प्रतिवर्षं मेलापकानि भवन्ति। प्रारम्भश्चैतेषां वस्तरमहाराजस्य विजयादशमीमहोत्सवसम्मेलनतः भवति। आदिवासिनः सामान्यतः श्रीदन्तेश्वरीदेव्याः भक्ताः सन्ति। "दन्तेवाड़ा" देव्याः सर्वस्मात्प्राचीनतरं जाज्वल्यमानपीठमस्ति। श्रूयते यद् वस्तरनृपाणां पूर्वजाः तत्रैव श्रीदन्तेश्वरीदेव्याः प्रतिष्ठामकुर्वन्। देव्यञ्चलवस्त्रमापिततत्वादेष प्रदेशः वस्तरेति नाम्ना प्रसिद्धिमवाप। विचारेणेदमायाति यत् शास्त्रवर्णितरक्तदन्तिकायाश्चात्र प्रतिष्ठास्ति। विजयादशमीमहोत्सवे राजधानीभूतजगदलपुरस्थाने देवीप्रतीकभूतच्छत्रादीनि शिविकयादिवासिभिरानीयन्ते। दशदिनं यावत् परितः समागतादिवासिभिर्जगदलपुरं पूरितं

भवति। स्वहस्तोपनीतकाष्ठसमुदायेन ते दिनत्रयेणैव षट्चक्रात्मकमभ्रंकषं रथं रचयन्ति । विविधमनोरमप्रस्तरणसमलङ्कृतेऽस्मिन् रथे देवीप्रतीकैः सह सपत्नीको भूतपूर्वनरेशश्रीप्रवीरचन्द्रभंजदेवः देवेन्द्रइवाधिरुह्य सहस्रैरादिवासिभिः रज्वाकर्षणेनाकृष्यमाणरथः, राजतच्छत्रचामरादिराजचिह्नैः शोभितः, लक्षाधिकदशकवृन्दसम्मर्दसम्मानितः पञ्चदिनानि यावत् सायंकाले नगरभ्रमणं करोति । विविधपटहादिवादित्राणां घोषेण, वन्यपशुशृङ्गादिविकटवेषभूषासमन्वितादिवासिनां नृत्यगीतेन, विस्तारितापणचाकचिक्येन, रात्रिंदिवं हासपरिहासादिललामलीलासंलग्नयुवजनजनितकिंपुरुषवर्षानन्दसमुदयेन, तिरस्कृतकिन्नरीविलासयुवतिजनानां समुन्मादकव्यापारेण, जगदलपुरमिदं प्राचीनकालिदासकालीनवैभवं स्मारयन्, विजयादशमीपर्यन्तं शोभासौभाग्यमावहति । एतत्समारोहानन्तरमेव चित्रकोट-चपकादिस्थानेषु मेलापकानि संयोजितानि भवन्ति। प्रसारितापणवीथिकापङ्क्तिषु स्त्रीणामेवाधिक्यं भवति। ताश्च यथोपलब्धप्रसाधनैरात्मानं विभूष्य, सत्यपि वृद्धात्वे कुमारिकेवात्मानं दर्शयन्त्यः, मधुरस्मितकटाक्षपूर्वकं क्रयणार्थसमागतजनैः साकं वार्तालापं कुर्वन्ति । शाकादिकं न तोल्यते, शाकानां फलानां च संख्याबन्धेन व्यवहारो भवति । तण्डुलादिकानां क्रयविक्रयव्यवहारश्च "सोली-पायली" इत्यादिपूरकपरिमाणेन भवति । मांसादकानां बहुलतया मांसस्य मत्स्यानाञ्चापणानि पृथक् भवन्ति । भर्जितानि, शुष्काणि, चूर्णितानि, जीवितानि च विभिन्नजातीयकानि पूतिगन्धयुक्तानि मत्स्यमांसानि तथापणैकदेशे विस्तारितानि भवन्ति । कुक्कुटानां तदण्डकानां च बाहुल्यमपि तत्र दृश्यते । जनाः विविधवस्तुभिः साकं तदपि प्रेम्णा क्रीणन्ति ।

आदिवासिजनेषु स्वभावतोऽनुशासनपालनप्रवृत्तिर्दृश्यते । मार्गे पंक्तिबद्धाः एव गच्छन्ति । आपणेष्वपि सर्वे विशुद्धपंक्तिभावबध्यैव वस्तुजातानि विक्रयार्थं प्रसारयन्ति । वस्तूनां मूल्यं निर्धारितमिव भवति । आत्मन इवान्यानपि निश्छलसत्यवादिनः जानन्त्येते प्रायोऽत्र

व्यापारराजनीतिशासनं सभ्यम्मन्यानां प्रतारकाणामेव हस्ते तिष्ठति। आपणे फलेषु कदलीफलानां रेण्डकर्किटिकानां बाहुल्य भवति। अत्र-त्यमिक्षुदण्डमतीवमधुरं भवति, केचन महिषसमुपनद्धकाष्ठयन्त्रेण रसं निष्कास्यापि विक्रयणं कुर्वन्ति। द्वित्रियोजनतोऽपि स्कन्धे वीवधं धृत्वा नियमत आपणं समागच्छन्ति। तत्र प्रयोजनं तु केवलं पणकचतुष्टयस्य तमालपत्रक्रयणमेव भवति।

शासनं सर्वादिवासिनां समुन्नत्यै बद्धपरिकरं वर्तते। परिवर्तनमपि किञ्चित् जातमेव। जगदलपुरे रविवारापणं दिने द्वादशवादनतः दिव-सावसानपर्यन्तं महाजनसम्मर्दपूर्णकोलाहलेन पूर्णं भवति। कानिचित् मेलापकानि सप्तदिनावधिकानि भवन्ति। तत्राभितः कौतुकिनः, चाक-चिक्यसमन्वितवस्तुविक्रेतारः, मिष्टान्न-चाय-ताम्बूलादिव्यवसायिनश्चै-कत्रिताः भवन्ति। सायंकाले जनसंकुलकोलाहलपूर्णविभिन्नमनोरञ्जन-युक्तापणयुक्तवीथिकासु विचित्रं शोभावहं दृश्यं भवति।

●

वैद्यान् प्रति

**मिथ्यौषधैर्हन्त मृषाकषायै—**
**रसह्यलेह्यैरयथार्थ तैलैः।**
**वैद्या इमे वञ्चितरुग्णवर्गाः**
**पिचण्डभाण्डं परिपूरयन्ति।**

श्री चन्द्रभानु त्रिपाठी

# नवसर्गगते माघे नवशब्दो न विद्यते

संस्कृतकविषु स्वं विशिष्टं स्थानमादधतो माघस्य शिशुपालवध-महाकाव्यमुपलक्ष्य प्रवर्तिता 'नवसर्गगते माघे नवशब्दो न विद्यते' इति समीक्षात्मिका सूक्ति. कस्य माघकविताभावकवरस्यास्तीति विद्या-वयोवृद्धानां साहित्यपारावारपारङ्गतानां समक्षमसकृत्कृता जिज्ञासा नेदानीमपि शान्ता। परं शिशुपालवधस्यावगाहनेनेयं न तावत्माधार-णस्य प्रशंसकस्य जल्पनामात्रमपि तु कस्यापि माघकाव्यानुशीलकस्य परिणतबुद्धेर्वि द्वरेण्यस्य सम्मतिरिति प्रतीयते।

विद्वदुपज्ञस्यास्य लेखस्य समीक्षणं द्विधा कार्यं समर्थनमुखेन आपत्तिनिरसनमुखेन च। समर्थनप्रस्तावे इदं सम्यगवधेयं यत्प्रायः महा-काव्यानाम् पूर्वार्धम् उत्तरार्धादुत्कृष्टतरम् भवति। नवमसर्गं यावद्रघु-वंशम्, अष्टमसर्गान्तं कुमारसम्भवम् समधिकाम् प्ररोचनामर्हतः। इयम् पद्धतिर्यद्यपि भारविणा माघेन च नाश्रिता तथाप्युत्तरत्र चित्र-काव्यबाहुल्यात् पूर्वार्धस्यैव प्राधान्यम् तत्रापि दृश्यते। अथ च काव्या-ध्येतृणामपि रसावगाहिनी प्रतिभा पूर्वभागप्रौढिविलासमंतृप्तोत्तर-भागे तर्कमाश्रित्य न तथा सरसतामापद्यते। एवञ्च 'नवसर्ग.........' इत्युक्तिः संगच्छते।

माघकाव्यस्यानुशीलनेन समवधार्यते यद्वर्णनप्रधानमिदं काव्यम्। कथांशस्तु स्वल्पतरः। एवञ्च 'नवसर्ग......' इतिकथने सर्वाङ्गश्रेष्ठता-विघातरूपाऽऽपत्तिः समापतति, यतो हि काव्यस्यानेके सर्गाः पृथक् कर्तुं शक्यन्ते चमत्काराधायकत्वेन लालित्याभिव्यञ्जकत्वेन च। नवमसर्गादग्रे ऽप्येकादशद्वादशसर्गयोः प्रकृतिचित्रणम्, चतुर्दशपञ्चदशसर्गयोरुक्ति-

वैचित्र्यम्, षोडशसर्गादारभ्यसमाप्तिपर्यन्तं युद्धवर्णनम् परमं रामणीयकमादधाति । एषा चापत्तिरेव निरस्ता भवति यथा (१) नवसर्गानन्तरम् दशमादिसर्गेषु यत्र कुत्रचित् पूर्वोक्तभागस्य विशदीकरणम्, तथाहि—चतुर्दशसर्गे शास्त्रीयं ज्ञानं प्रथमद्वितीयसर्गयोः कृतस्य भाष्यरूपम् एवम् एकोनविंशतितमे सर्गे द्वितीय सर्गे द्वितीयसर्गस्य. एकादशसर्गे चतुर्थसर्गस्य छायेव दृश्यते । (२) काव्यकौशलं तदुपयोगि वर्णविन्यासो यथा नवसु सर्गेषु दृश्यते अग्रे तदपेक्षया किञ्चिन्न्यूनमस्ति शब्दसमूहश्च पुनरावृत्तः । (३) उभयत्र नवपदम् अनुप्रासेन श्लेषेण चाधिक सङ्गच्छते इति भावेन प्रयुक्तम् नवसर्गपदमुपलक्षणम् भवति तेन 'नवसर्गगते' इति माघकाव्यमात्रतात्पर्यकम् इति पर्यवस्यतीति बुधाः । एवम्भूतेऽनवद्ये समग्रे काव्येऽस्याः सूक्तेरधो लिखिता अभिप्रायाः प्रतिभान्ति ।

(१) नवसु सर्गेषु पठितेषु सर्वे शब्दाः परिचिताः भवन्ति (प्रथमो नवशब्दः संख्यावाचको द्वितीयो नूतनार्थकः ।)

(२) यथोत्तरं नवतमः सर्गः पठ्यते तथा नूतनशब्दो न विद्यते अर्थात् प्रथमसर्गपाठानन्तरम् द्वितीये समधीयमाने सर्वे पूर्वपठिताः श्लोकाः परिचितशब्दयोजिताः भवन्ति एवं तृतीये चतुर्थे पञ्चमे······ इत्यादि ।

(३) नूतनसर्गसमाप्तौ न स समुचितप्रयोगार्हः शब्दोऽवशिष्यते यो न प्रयुक्तोऽभूत् अर्थात्तात्पर्यावच्छेदकाः सर्व एव शब्दाः प्रयुक्ताः ।

(४) माघकाव्यस्य नवसु सर्गेषु समधिगतेषु भावानुवादिनां समेषाम् प्रयुक्तशब्दानां ज्ञानम् भवति, एवम्भूतो नूतन शब्दो नास्ति यो माघकाव्यादितरेषु काव्येषु तस्मिन् वाच्ये प्रयुक्तोऽभूत्, अत्र तु न ।

इमे क्रमशः समीक्ष्यन्ते—

माघकाव्यस्यानुशीलनेन ज्ञायते यन्न तावन्नवसर्गात्मके मात्रे काशसङ्गृहीतानां सर्वेषां शब्दानाम् प्रयोगो वर्तते । न चेदं काव्यम् भट्टिकाव्यवच्छब्दकोशज्ञानहेतुकं विरचितम् न च इन्द्रस्य पर्यायो विडौजा, मधुकरवाचक इन्दिन्दिरः, पृथ्वीतात्पर्यककाश्यपीति पदानि न विद्यन्ते

एवञ्च न प्रथमोऽभिप्रायः समीचीनः। द्वितीयस्त्वभिप्रायः पिष्टपेषण-मात्रम् न कमपि विशिष्टाथमाह—यतोहि शब्दार्थविभवाः कवयो भवन्ति, नूतननमवाग्विलास एव् महाकवेर्वैशिष्ट्यम्। एवं तृतीयोऽप्यभिप्रायो निरस्तः उभयत्र नूतनार्थकनवशब्दस्वीकारेण काव्यसमीक्षासूक्तौ न किमपि वैशिष्ट्यम् प्रतीयते। तात्पर्यानाधायकान् शब्दान् प्रयुञ्जानः कविर्हास्यास्पदम् भवति।

तथाचास्याः सूक्तेश्चतुर्थोऽभिप्रायः समीचीनः। पूर्वस्मिन् नवशब्दे श्लेषस्वीकारेणास्य काव्यस्य नवसु सर्गेषु समधीतेषु प्रथमादिसर्गानन्तरं द्वितीयादिनूतनतमसर्गावतारे समुचितभावाभिव्यञ्जक एवम्भूतो नूतनशब्दो नास्ति यः प्रयोगार्होऽपि महाकवेर्दृष्ट्याश्च्युतो न प्रयुक्त इति विशदं तात्पर्यमधिगम्यते।

शब्दवैचित्र्यस्य महत्त्वम् बहुशोऽनुमीतम् महाकविना द्वितीयसर्गे यथा--

(१) अनन्ता वाङ्मयस्याहो गेयस्येव विचित्रता (२-७२)

(२) अनुज्झितार्थ सम्बन्धः प्रबन्धो दुरुदाहरः (२-७३)

(३) प्रसारयन्ति कुशलाश्चित्रां वाचम् पटीमिव (२-७४)

(४) शब्दार्थौ सत्कविरिव द्वयं विद्वानपेक्षते (२-८६)

महाकवेर्माघस्य निखिलविद्याप्रकाशः सततं परिस्फुरन्नासीदिति तत्र-तत्र विद्याङ्गविशेषमात्रप्रसिद्धशब्दप्रयोगादवमाम्यते। प्रथमसर्गे भगवद्वर्णने अद्वैतवेदान्तसांख्यपाञ्चरात्रदर्शनविशेषाणां सिद्धान्ताः प्रतिपादिताः। 'क्रमादमुं नारद इत्यबोधि सः' श्लोके निर्विकल्पक प्रत्यक्षप्रकारः प्रकटीकृतः। ग्राम-मूर्छनादिसङ्गीतशास्त्रमात्रप्रसिद्ध-पदानि तच्छास्त्रीयपाण्डित्यप्रदर्शनायालं सन्ति। द्वितीयसर्गे नीति-शास्त्रेणेतरेषां समन्वयो विशेषणपदविन्यासकौशलेन कृतोऽस्याद्-भुतं प्रतिभाविशेषमभिव्यनक्ति यथा षड्विंशतितमे श्लोके सौगतमतेन विशेषणसादृश्यम्। एकमुदाहरणं—माघकवेः शब्दविन्यासपटुतायाः प्रदीयते—

अनुत्सूत्रपदन्यासा सद्वृत्तिः सन्निबन्धना
शब्दविद्येव नो भाति राजनीतिरपस्पशा ।। (२-११२)

अस्मिन् श्लोके सूत्रादिपदानां व्याकरणशास्त्रे राजनीतौ च पृथगर्थाः वर्तन्ते यथा—

| पदानि | व्याकरणशास्त्रेऽर्थः | राजनीतिशास्त्रेऽर्थः |
|---|---|---|
| सूत्रम् | पाणिनिरचिताध्यायाष्टकेऽन्यतमम् | नीतिशास्त्रम् |
| पदम् | समर्थः शब्दसमूहः | सामादिचतुष्टयम् |
| न्यासः | जिनेन्द्रकृतो व्याकरणग्रन्थविशेषः | नियोगः |
| वृत्तिः | काशिकाग्रन्थः | भृत्यादीनामाजीविका |
| निबन्धनम् | भाष्यम् | शासनपट्टकम् |
| पश्पशः | प्रयोजनग्रन्थः | चरः |

एवञ्च शास्त्रद्वयमात्रप्रसिद्धशब्दानां सङ्गत्योपमालङ्कारप्रयोगो सर्वथा नवतमः विद्वन्मनोहरति । एवमनेकत्र द्वितीयसर्गे सादृश्यप्रस्तावेन स्वकीयं वैदुष्यं स्फुटीकृतम । यथा तन्त्रशास्त्रम् द्व्यशीतितमे श्लोके, रसशास्त्रपरिचयः ऊननवतितमे । तृतीयसर्गे पञ्चाशत्तमे श्लोके विरोधाभसालङ्कारेण त्रिपञ्चाशत्तमे च द्व्यर्थकपताकविविक्तवलीकपद प्रयोगेण च महाकवेः शब्दौघः परिचीयते । अस्मिन्नेव सर्गे द्वारकापुरीवर्णने वास्तुविद्यायाः अश्वहस्तिशास्त्रोक्तपदप्रयोगेन शालिहोत्र पारङ्गतत्वं गजविज्ञाने वैदुष्यं चावगम्यते । पञ्चमेऽपि सर्गे अश्वगज शास्त्रविज्ञानं नवपदविन्यासेन सूचितं भवति ।

अस्य शब्दज्ञानविवेचनं, उत्तरोत्तरं नवपदप्रयोगस्वभावश्च एवं ज्ञायते यदनेन महाकविना प्रथमसर्गे भगवतः कृष्णस्य विंशतिः पर्यायपदानि प्रयुक्तानि । तेषु कंसकृट् (कंसकृषः), यज्वनां प्रियः प्रभृतियौगिकानि नवीनतमानि सन्ति । एरावतवाचिभर्तुरभ्रयोः उद्धववाचकं 'पवनव्याधेः' इन्द्रार्थे 'कौशिकः' इत्यादि पदजातं प्रयुक्तं सत् महाकवेरद्भुतां पदप्रयोगशक्तिं प्रदर्शयन्ति । नवमसर्गे इन्दोः चतुर्दशपर्यायाः

प्रयुक्ताः ते च सन्ति क्रमेण, शीतरुक्, इन्दुः, तुषारकिरणः, हिमरश्मिः, हिमदीधितिः, तुहिनद्युतिः, शशी, उडुपतिः, मृगधरः, ओषधिपतिः, रजनीकरः, अघर्मधामः, सितदीधितिः, चन्द्रः । अत्र इन्दुशशिनोर्द्वयोरेव द्विरावृत्तिर्दृश्यते, नेतरेषाम् । रैवतकपर्वतवर्णने 'सहस्र शीर्षेति मन्त्रस्य चन्द्रमा मनसो जात इति मन्त्रार्धस्य भावः कीदृक् समुल्लसति ।

यमकमाधुरीबहुज्ञतायाः काव्यकल्पनाकलनायाश्च निकषम् अस्ति । तदाविष्करणाय माघेन स्वकीयाक्षयशब्दकोशद्वारं निरर्गलमनावृतकपाटञ्चात्र विहितम् । अस्मिन् सर्गे तथा यौगिकशब्दरचना दृश्यते यथा महाभाष्योक्तं 'अनन्तपारं किल शब्दशास्त्र' प्रत्यक्षीभवति । प्रतिश्लोकार्थावबोधाय पाठकाः शब्दकोशेषु टीकासु च सान्द्रादराः भवन्ति । अत्र सन्धि-समास-यौगिकपदरचना-धातु-तद्धित-कृदन्त-स्त्रीप्रत्यान्तपदप्रयोगकरणेन महाकविना यमकालङ्कारस्योत्कृष्टतमत्वं प्रतिपादितम् । क्रमशः उदाह्रियते—

सन्धिः—स्वरमयूरमयू रमणीयताम् (रलोपसन्धिकरणेन मयूर पदरचना दृश्यते । (६-४४) ।

समासः—केशे रते स्मरसहऽऽसवतोषितेन के शेरते स्मरसहासवतोषितेन । (६-७७)

यौगिकपदरचना—क्षमघनामघनाशनकीर्तनः । (६-४२)

अत्र अघनाशनकीर्तन इति भगवतः यौगिकनामकरणेन यमकशोभा कृता ।

धातुप्रयोगः—रुरुचिरे रुचिरेक्षणविभ्रमाः । (६-४६)

सतुहिनस्तु हिनस्तु वियोगिनः । (६-५६)

सन्धिसमासक्रियापदानामेकत्र नवविन्यासकलाकुशलतया माधुर्योपपादनं कीदृक् शोभते ।

परितस्तार रवेरसत्यवश्यम्
परितस्ताररवे रसत्यवश्यम् । (६-७०)

रुचिरं कमनीयतरा गमिता ।

रुचिरङ्कमनीयत रागमिता ।। (६-७१)

तद्धितप्रयोगः—सहसाऽऽयन्त नदी पपाट लाभे ।

सह सायन्तनदीपपाटलाभे ।। (६-७२)

कृदन्तप्रयोगः—

समुद्धृताशङ्कमनीचकाशे । (६-७४)

अत्र कमनीपदे कर्तरि ल्युट् ततः ङीप् एवञ्च स्त्रीप्रत्ययप्रयोगस्या-पीदमेवोदाहरणं बोध्यम् । निम्नलिखिते श्लोकसमपादद्वये बहुविधनव-पदरचनाप्रयोगेण महकवेर्वैदुष्यं द्रष्टव्यमस्ति ।

कामेकान्ते सारसिकाकाकुरुतेन ।

कामेकान्ते सा रसिका का कुरुते न ।। (६-७७)

एवं विधशब्दकोशस्वामितया महाकविर्माघः शब्दसाम्राज्ये चक्रव-र्तित्वमवाप । सप्तमसर्गे चतुस्त्रिंशत्तमः श्लोकः समस्तपदसमूहरूपः उल्लेख्योऽस्ति शब्दज्ञानोदाहरणेषु । अस्मिन् सर्गे मिमान, न्यधित, उदास, अष्टमसर्गे च ईषिरे, निरासिरे, अधाक्षुः, उत्तेरे नवमसर्गे च समस्कुरुत, उदमज्जि, ववसे, अध्यवससौ प्रभृतीनि विशिष्टानि क्रिया-पदानि महाकवेः ज्ञानं प्रथयन्ति ।

अनेन प्रयुक्ताः अनेके शब्दाः देशविशेषे शास्त्रविशेषे भाषाविशेषे च एव प्रसिद्धाः न सामान्यतया । यथा अभ्यासार्थको गुणनिकाशब्दः, युद्धविज्ञानमात्रप्रसिद्धाः वीवधासारप्रसारशब्दाः । आभीरदेश-प्रसिद्धधूम्रवर्णकचूतपल्लवपदात् सदृशार्थकतद्धितप्रत्ययं कृत्वा चौत-पल्लवीपदम् । विटवाचकः षिङ्गशब्दः, नीलतृणवाची उलपशब्दः, मैनसिलवाची कुरुविन्दशब्दः सन्ध्यावाचकः पितृप्रसूशब्दः इत्यादि अस्य शब्दज्ञानप्रयोगकौशलावगमकाः सन्ति ।

लालित्यलोभाकृष्टोऽसौ महाकविः आशुयौगिकपदरचनासमर्थो नवशब्दप्रयोग इव नवार्थावतारे पटीयानासीत् । यथा–लिलङ्घयिषतो लोकानलङ्घ्या न लघीयसः (२–६६) । अत्र सन्-ण्यत्-ईयसुन् प्रत्ययान्तपदप्रयोगेणानुप्राससुषमाविलासः प्रदर्शितः । एवं चिक्रंसया कृत्रिमपत्रिपंक्तेरित्यत्राऽपि ज्ञेयम् । अयमेकः श्लोकः रमणीयतामातन्वन् शब्दज्ञानं महाकवेः प्रथयति ।

राजीवराजीवशलोलभृङ्गं मुष्णन्तमुष्णं ततिभिस्तरूणाम् ॥
कान्ताऽलकान्ता ललनाः सुराणां रक्षोभिरक्षोभितमुद्वहन्तम् ॥
(४–९)

इत्थं परमप्रबुद्धः पण्डितवरः कश्चित् पाण्डित्यप्राप्ति-प्रकारः पृष्टः सन् उक्तवान् '( मेघे ) माघे गतं वयः' अर्थात् मेघदूतमधीत्य माघकाव्यं सम्यगालोडितम् । तेनेदृशज्ञानगरिमा दृश्यते । एवं मुरारिकवेरतिक्लिष्टकाव्यबोधाय शब्दार्थयोः सम्यक् ज्ञानार्थं माघकाव्याध्ययनमनिवार्यमित्यर्थबोधिका श्लिष्टार्थाभिधायिनी सूक्तिः सङ्गच्छते ।

मुरारिपदचिन्ता चेत्तदा माघे रतिं कुरु ।
मुरारिपदचिन्ता चेत्तदा माऽघे रतिं कुरु ॥

केचन पुनः पण्डितम्मन्याः नवशब्दो न विद्यते इत्यत्र काक्वा 'किं नवशब्दो न विद्यते' अर्थात् बहवः नूतनशब्दाः सन्ति इति तात्पर्यं कुर्वन्ति । केचन पुनः 'नवशब्दः' इत्यस्य नवसंख्याविशिष्टाः शब्दाः के सन्ति इति तात्पर्यं कृत्वा ते के सन्ति इति प्रश्नरूपामिमां सूक्तिं मन्यन्ते । परमिदं मतद्वयमपि निरस्तमुक्तव्याख्यानेनेत्यलम् ।

# सा

•

प्रभातमिश्रः

पदानां विक्षेपैः व्यथयति च या हंसनिवहान्,
मनोज्ञा यस्याः सा मृदुवचनविन्याससरणिः ।
तटस्थश्रोतॄणां क्षरति मधुधारां श्रुतितले,
नवीना मीनाक्षी तरुणहृदि किन्नैव कुरुते ।

भ्रमन्ती नृत्यन्ती प्रतिसुमवसन्ती मधुकरी,
यथा द्रष्टुश्चित्तन्तरलयति हर्षं जनयति ।
तथैवेयं तन्वी तरलनयना कान्तवदना,
कटाक्षैर्मीनाक्षी मदयति मुनीनामपि मनः ॥

यदीयं तारुण्यं तरुण-जन-मोहान्ध-करणं,
यदीयं सौन्दर्यं रतिपतिविलासैर्विरचितम् ।
यदीयं चाञ्चल्यं चटुलयति चित्तं प्रतिपलम्,
अहो सा मीनाक्षी विधि-विहित-वैचित्र्य-वसतिः ॥

श्रीकेदारनाथ ओझाः

# अद्वैतरत्नम्

अद्वैतविद्याविद्योतनद्युमणिः परमहंसचक्रचूडामणिः श्रीमान् मधुसूदनसरस्वतीयतीश्वरो मध्येवयसि वर्तमानो भारतपुराणोपपुराणानि वेदव्यासइव अद्वैतसिद्धिप्रभृतिनानाग्रन्थमणीन् विरचय्यापि सन्तोषमलभमानो भागवतरत्नमिव अद्वैतरत्नरक्षणाभिधं ग्रन्थरत्नं निर्मित्सुर्दिनमणौ तापमुपसंहरति रहसि सायं नदीतटपरिसरे चिन्तयन् छन्दोबद्धं मन्दं मन्दं किमपि मधुरं गायन्निव विहरति, तस्य व्यक्तित्वे प्रभावपातिनि मुनित्वे च श्रद्धालुस्तुरीयवया अध्ययनाध्यापनार्जितयशा द्वैतविद्याविवेकदृढमना जरन्नैयायिकः कश्चिदात्मानं गोपयन्नेव क्षणं धृतमौनो निभृतमपवारितपादस्वनोऽनुसरन् सावधानोऽर्पितकर्णो मन्दामपि तदीयवाचमाकर्णयति चेतसा निमज्जति च ।

गायति श्रीमधुसूदनसरस्वतीयतिवरः ।

बृहदारण्यनिविष्टं विलुठितमाभीरवारनारीभिः
सत्यचिदानन्दघनं ब्रह्म नराकारमालम्बे ॥१॥

निर्जित्य प्रतिपक्षान् द्वैतधियो दुष्टतार्किकंमन्यान् ।
अद्वैततत्त्वरत्नं रक्षितुमयमुद्यमः क्षमः स्यान्नः ॥२॥

अद्वैतरत्नममलं जपमन्त्रजापं
सेवस्व कल्पविटपं त्यज मोहजालम् ।
विद्याविमुक्तिसुखसन्ततिमाश्रयस्व
मायाममेयरसनां नहि चालयस्व ॥३॥

कुतर्कगरलाकुलं भिषजितुं मनोर्दुधियाम्
मयेदमवधारितं विषविधातिरत्नं महत् ॥
अनेन सकलापदो विघटयस्व यद्यद्भवेत्
सदा भज महेश्वरं सकललोकसाक्षिप्रभुम् ॥४॥
भजत मनुजाः प्रीताश्चेतोमलस्य विशोधनम्
हरिहरगलोरसो रत्नं भवद् भवभञ्जनम् ॥
क्षिणुत मनसाद्वैतं तूर्णं निभालयताखिलम्
हरिहरकृपा सुधाशौचं समाचरता गलम् ॥५॥

पश्चादेव गच्छन् द्वैती ब्रूते–

सन्न्यस्तो परयौवते विलुठितं तत्रः शिवं सुन्दरम्
स्वल्पज्ञः श्रुतिकोटिभिः स्तुतनतं सर्वप्रमास्वामिनम् ।
जीवाभिन्नमजीवजीवरचना चातुर्यचिन्तामणिम्
जानन्नद्वयमाजपन्न मनुषे मिथ्यावचस्त्वादृशाम् ॥१॥

ससंभ्रमं परावृत्तो मुनिः शृणोति—

(१) 'इद सर्वं यदयमात्मा' इत्यादिश्रुतेः सर्वव्यापकत्वं विभुत्वमीश्वरस्यानुक्त्वा सर्वात्मकत्वं वर्णयन् दुःखात्मता नरकात्मकताञ्च आर्तिच्छिदोनरकभिदश्च भगवत आपादयति ।

(२) 'आनन्दं ब्रह्मणोऽरूपं तच्च मोक्षे प्रतिष्ठितम्' इतिश्रुताव-कारप्रश्लेषं विहाय आत्मनः सुखाश्रयत्वं खण्डयन्ति आनन्दात्मकताञ्च वर्णयन्ति अद्वैतिनः,

तन्न युज्यते, मोक्षे हि आनन्दरूपस्य प्रतिष्ठा मन्यते चेत् तदानन्द-रूपस्य अनित्यता नित्यता वा प्रथमे ब्रह्मणोऽपि अनित्यता, द्वितीये संसारदशायामपि कथन्नानुभूयते ? तस्मान्न आनन्दरूपता आत्मनः किन्तु आनन्दधर्मवत्त्वम्, अरूपमित्यकारस्य प्रश्लेषः, तच्च मोक्षे

इत्यादिहेतुसूचकम् । मोक्षे शुद्धमात्मरूपं प्रतिष्ठितमतो नानन्दरूपं ब्रह्मणः । इति

अङ्गुलिसंकेतेन नैयायिकमुपदेशयन् स्थण्डिले आसीनोमुनिर्ब्रूते—

(१) नहि नीलं कमलमितिवद्विशेष्यविशेषणभावे इदं सर्वं यदयमा- इत्यादिश्रुतिः किन्तु ह्यः सायं मन्दान्धकारे दृष्टः सर्पोऽधुना रज्जुरिति- तात्पर्यकं सर्पो रज्जुरितिवाक्यमिव बाधायां सामानाधिकरण्यम् । यथा सर्पस्य बाधेन रज्जुमात्रावशेषस्तथा सर्वस्य प्रपञ्चस्य बाधेन ब्रह्मात्ममात्रावशेषः । अतएव खण्डनकृता प्रतिपाद्यते—

एकं ब्रह्मास्त्रमादाय नान्यं गणयतः क्वचित् । आस्ते न धीरवीरस्य भङ्गः संगरकेलिषु ।।

अस्तिकदर्शनदार्शनिकतया भवता श्रुतिसिद्धोऽर्थोऽवश्यमुपादेयोऽ- न्यथा बौद्ध इव भवान् अपि खण्डनखण्डखाद्यखड्गेनैव सत्करणीयः स्यात् । आत्मनः कृते 'तत्सत्यं स आत्मा' 'सत्यस्य सत्यम्' 'अस्तीत्येवो- पलब्धव्यः' श्रुतयः संगमनीयाः ।

प्रपञ्चबाधस्य च परिपुष्टये 'नेति नेति' 'नेह नानास्ति किञ्चन' 'अतोऽन्यदार्तम्' 'सलिल एको द्रष्टाद्वैतो भवति' इत्यादिवेदान्तवाक्यानि संगमनीयानि, नास्याद्वैतस्य बाधनाय मतिरर्पणीया, सत्यमाह खण्डनकृत्,

धीधना बाधनायास्यास्तदा प्रज्ञां प्रयच्छथ ।।
क्षेप्तुं चिन्तामणिं पाणिलब्धमब्धौ यदीच्छथ ।।

(२) ब्रह्मण आनन्दात्मकत्वे 'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते' 'आनन्देन जातानि जीवन्ति' 'आनन्दो ब्रह्मेति व्यजानात्' 'कोह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यात्' 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इत्यादिश्रुतिशतानि विवेचनीयानि । तस्य च आनन्दस्य अविद्यानिवृत्तिर्व्यञ्जिका । सा चेदानीं नास्ति तत्त्वज्ञानाभावात्,

तादृशानन्दस्य संसारदशायामनभिव्यक्तेरेव क्षुद्रतरे सुखे मोहात् प्रवृत्तिः, मोहनिवृत्तौ तु प्रवृत्त्यभाव इष्ट एव ।

ज्ञानसुखयोरनित्यत्वं यदि प्रत्यक्षीकरोषि तर्हि कुरु परं स्वात्मन एव नतु भगवतः, श्रुतिशतैः प्रतिपादितं भगवतो नित्यसुखात्मकत्वं कथं नाभ्युपैषि ? कथं तव श्रुतिविद्वेषः ? तर्हि तत्रैव लब्धप्रसरा श्रुतिस्त्वामनुग्रहीष्यति । प्रत्यक्षे बहुलं विसंवादोपलम्भात् सावधानं प्रत्यक्षं चिन्तय, व्यक्त्या सहैव जातेरुपलम्भाद् व्यक्तेर्वस्तुत उत्पादविनाशौ न नित्याया जातेरित्यङ्गीकरोषि तथा ज्ञानसुखयोरपि उत्पादविनाशप्रत्यक्षप्रत्ययौ चिन्तय कि ज्ञानसुखयोरेव उत्पादविनाशौ उत वृत्तेः सन्निकर्षस्य वा ?, न निर्णेतुं शक्नोषि चेत् प्रयतस्व, श्रुतौशरणमन्विच्छ, श्रुतिसिद्धं ज्ञानसुखयोर्नित्यत्वमङ्गीकुरु, आसेवितं हि तव प्रत्यक्षबलं निर्णयनिकषे गलितम् ।

द्वैती नैयायिकः—सत्यं श्रुतेः प्रामाण्यं परं न भेदो निरस्तो भवति, किं हि अविद्यानिवृत्त्या मोक्षसाधनम् ? तेनापि ब्रह्मभिन्नेन भाव्यम्, सतो अद्वैतसिद्धिरपि अन्यान् निघ्नन्ती स्वयमेव ब्रह्मभिन्ना प्रगल्भेत ।

अद्वैती यतीश्वरः—यावदविद्या वर्तते तावत्तु भेदेन विलसनीयम् एव, ब्रह्माकारा अन्तःकरणवृत्तिर्हि अविद्यानिवृत्तिकरी । अधिष्ठानस्य ब्रह्मणः शुद्धस्य साक्षात्काररूपत्वात् । यद्यपि सा जडा तथापि तत् प्रतिबिम्बितश्चिदात्मैव तन्निवर्तकः साचान्तःकरणवृत्तिरविद्यांसकार्यां नाशयित्वा स्वयमपि नश्यति यथाऽनल इन्धनानि दग्ध्वा स्वयं विनश्यति । 'द्वितीयाद्वै भयंभवति इत्यादिश्रुत्या भेदज्ञानं मुक्तिप्रतिबन्धकमिति श्रद्धत्स्व, वेदान्तवाक्यजन्यान्निर्विकल्पकब्रह्मसाक्षात्कारादेव मुक्तिः । एवमद्वैतश्रुतेः प्रामाणिकत्वे भेदो निरस्यत एव । तथाहि आह-

प्रामाणिको निषेधश्चेद्भेदोऽप्रामाणिकस्ततः ।
भेदस्यापि निषिद्धत्वाच्छ्रुतिभङ्गोऽन्यथा भवेत् ।

श्रुतिर्हि सामान्याकारेण द्वैतमात्राभावं प्रतिपादयति, भेदोऽपि द्वैतमध्ये प्रविष्ट एव ।

अद्वैतश्रुतिरपि ब्रह्मातिरिक्ता निषिध्यत एव श्रुत्या । तथा च क्वाद्वैत-व्याघातः, श्रुतिर्हि सत्येति न शङ्कनीयम् तस्या अपि निषेधात्, नह्यद्वैत-श्रुतिरात्मानं रक्षति, तथा सति स्वविषयसिद्धिः प्रसज्येत । तथा चाह—

अद्वैतसिद्धिरद्वैतं न विहन्ति कथंचन ।
सत्यत्वाद्घ्नन्ति चेन्नैवं द्वैत-मात्रनिषेधतः ॥
आत्माभेदमजानानाः स्वतः सिद्धं मुमुक्षवः ।
माभूवन्न फलायासा इत्यभेदो निरूपितः ॥

<u>द्वैती</u>—यद्यपीयता प्रबन्धेनाद्वैतरत्नं सुनिरूपितं भवद्भिर्दयालुभिः, तथापि नास्मदीयहृदये आस्पदमादधाति, किमत्र करोमि ? ।

<u>अद्वैती</u>—शृणु वृद्धोक्ष ! शैलसारहृदयोऽसि । तदुक्तं भवतः श्रद्धास्पदेनोदयनेन—

इत्येवं श्रुतिनीतिसम्प्लवजलैर्भूयोभिराक्षालिते
येषां नास्पदमादधाति हृदये ते शैलसाराशयाः ।
किन्तु प्रस्तुतविप्रतीपविधयाऽप्युच्चैर्भवच्चिन्तकाः
काले कारुणिक ! त्वयैव कृपया ते भावनीया नराः ॥

<u>द्वैती</u>—किमित्यधिक्षिपसि वृद्धोक्षेति; तवापि चित्ते किमद्वैतरत्नं चकास्ति ? ।

<u>अद्वैती</u>—नितरां मूर्खोऽसि, नहि त्वमिवाहम् । यथा चोक्तं तेनैवाचार्येण—

अस्माकन्तु निसर्गसुन्दर ? चिराच्चेतो निमग्नं त्वयीत्यद्धाऽ-नन्दनिधे ? तथापि तव तन्नाद्यापि संदृश्यते ।

तन्नाथ ! त्वरितं विधेहि करुणां येन त्वयैकात्मतां
याते चेतसि नाप्नवाम शतशो याम्याः पुनर्यातनाः ।।

यत एवानन्दनिधिरत एव निसर्गसुन्दरः, सुखरूपत्वमन्तरेण निसर्गसुन्दरत्वानुपपत्तेः, कथमपि त्वादृशां दुःखाभावलक्षणया भगवतो निसर्गसुन्दरत्वस्य तादृशी स्वारसिकता न निर्वहति, वेदोऽप्यनुगृहीत एवम् ।

द्वैती—तथापि मम चित्ते न यात्यद्वैतरत्नम् ।

अद्वैती—शृणु ब्रह्मबन्धो ? ब्रह्मद्वेषजनितपातकदूषितान्तः-करणोऽसि ।

द्वैती—ब्रह्मन् ! शाधि मां यथाऽस्मिन्नद्वैताध्वनि मच्चित्तं-प्रविशतीति ।

अद्वैती—शृणु वत्स ? ईश्वरमुपास्व—

तदुक्तम् – ईश्वरानुग्रहादेषा पुंसामद्वैतवासना ।
महाभयकृतत्राणा द्वित्राणां यदि जायते ।।

तथा—मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ।। इत्यादि ।

द्वैती—ब्रह्मन् ! किमिति वत्सेति सम्बोधयसि ? वृद्धोऽहम् ।

अद्वैती ततःकिम् ? न तेन स्थविरो भवति येनास्य पलितं शिरः ।
यो वै युवाऽप्यधीयानस्तं देवाः स्थविरं विदुः ।। इति

द्वैती—ब्रह्मन् ! ईश्वरोपासमनमपि सर्वदा कर्तुमशक्यम्, विषयै-श्चित्तस्य आक्षिप्तत्वात् ।

अद्वैती—अरे बालिश ! विषये दोषं पश्य—

अमानित्वमदम्भित्वमहिंसाक्षान्तिरार्जवम् ।
आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ॥
इन्द्रियार्थेषु वैराग्यमनहङ्कार एव च ।
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥
असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु ।
नित्यञ्च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥
मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ।
विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥
अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् ।
एतद्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ॥

एतद् ज्ञानम् ज्ञानसाधनमित्यर्थः, तथाच एतावन्ति साधनानि यस्य तस्यैव ज्ञानं मुक्तिहेतुभूतमुत्पद्यते, तद् एतानि सम्पादय ।

द्वैती—ब्रह्मन् ! एतेषां मध्ये एकमपि साधनं मम नास्ति सुगममुपायं वद ।

अद्वैती—स्मर तर्हि विष्णुमहर्निशम् । तदुक्तम्—

स्मर्तव्यः सततं विष्णुर्विस्मर्तव्यो न जातु चित् ।
सर्वे विधिनिषेधाः स्युरेतयोरेव किङ्कराः ॥
चिन्त्यमानः समस्तानां क्लेशानां हानिदो हि यः ।
समुत्सृज्याखिलं चिन्त्यः सोऽच्युतः किं न चिन्त्यते ॥ इति ।

तथा च सर्वदा विष्णुनामस्मरणेन शुद्धान्तः सन् उक्तसाधनफलवान् भविष्यसीति ।

द्वैती—भगवन् ! सर्वदा नामकीर्तनेऽप्यहमसमर्थस्ततोऽप्युपायान्तरं वद ।

अद्वैती—शृणु वत्स ! लौकिकं वैदिकं वा यत्किञ्चन कर्म तत्सर्वं भगवति वासुदेवे समर्पितं कुरु, तदुक्तम्—

सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः ।
मत्प्रसादात् परा शान्तिमचिरेणाधिगच्छति ॥
यत् करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत् तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥

द्वैती—भगवन् ! तत्तत्कर्मजन्यस्वर्गादिफलानां कामनया मे मन आक्षिप्तं तेन फलमनुद्दिश्य तत्तत्कर्मजातमपि कर्तुं नाहमुत्सहे ।

अद्वैती—अरे, नूनमूषरात्मासि ।

द्वैती—भगवन् ! किं बहव आत्मानस्तव मते ? यन्मामूषरात्मेति सम्बोधयसि ।

अद्वैती—शृणु वत्स ! एकं ब्रह्म त्रिविधपरिच्छेदशून्यं वस्तुवृत्तमीदृशम्, तथाप्यनाद्यनन्ताभिरविद्याभिः परिच्छिन्नम् अनेकमिव भवति, तस्यामविद्यावस्थायां स्थित्वोषरात्मा त्वं निगद्यसे ।

द्वैती—भगवन् ! नाहमुपेक्षणीयः, सर्वमुक्तेस्त्वयाप्यङ्गीकारात्, अहमपि च स्वरूपयोग्यो भवाम्येव, संसारित्वेनैव मुक्तावधिकारात्, स्वरूपयोग्यस्य च नित्यस्यावश्यं सहकारिलाभात्, तथाचाहमपि कदाचिच्छमदमादिलाभान्वितो भविष्यामि

अद्वैती—शृणु वत्स ! फलरागं त्यक्त्वा भगवदर्पणेन कर्माणि कुरु, फलरागत्यागे च क्षयिष्णुत्वादिदोषदर्शनमेवोपायः ।

तदाह—तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते, इति ।

द्वैती—भगवन् ! एवं करिष्यामि, मम चित्ते विषयेषु दोषदर्शनम् आविर्भूतम्, तथा हि इह संसारकान्तारे बहूनि दुःखदुर्दिनान्यल्पा च सुखद्योतिकेत्युत्पन्नविवेकबुद्धिरनुष्ठितभगवदर्पणकर्मकलापः शुद्धस्वान्तः सम्प्रति संवृत्तोऽस्मि । भगवन् ! शाधि किमतः करवाणीति ।

अद्वैती—शृणु वत्स ! गुरूपसदनं कुरु । तथाहि—परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन । तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् ।। अकृतो मोक्षः, कृतेन कर्मणा नास्तीत्यर्थः । एतावता विद्यमान एव मोक्षो ज्ञानेनाभिव्यज्यते इत्यर्थः प्रतीयते, तथा च जन्यो मोक्ष इति पक्षो वेदविरुद्ध इतिध्येयम् ।

द्वैती—भगवन् ! उक्तलक्षणो गुरुस्त्वमेव, अतस्त्वामुपसन्नं संसारदुःखजर्जरितान्तः करणं मां विद्यार्थिनमुपदिश, येनाहं निरतिशयानन्दं सर्वदुःखाभावोपलक्षितं लब्ध्वा कृतार्थो भवामीति ।

अद्वैती गुरुः—शृणु, तत्त्वमसि, महानुपदेशोऽयम् । श्रद्धत्स्व सौम्य ? ।

द्वैती शिष्यः—अत्र कोवा तदर्थः ? को वात्वमित्यस्यार्थः ? को वासीत्यस्य ? ।

गुरु—अद्वितीयं सच्चिदानन्दरूपं ब्रह्म तदर्थः, अहमिति प्रत्ययं भासमानो देहादिव्यतिरिक्तः सुखादिमत्वेन च भवत् (नैयायिक) प्रसिद्धस्त्वमर्थः, उभयोः पदार्थयोरभेदो वाक्यार्थः, असीत्यनेन च तस्य सार्वदिक्त्वं प्रतिपाद्यते ।

तदुक्तम्—त्वं प्रत्यगव्यवहितं तव सुप्रसिद्धं ब्रह्माद्वितीयमुदितं तदस्य जन्तम्, इति ।।

शिष्यः—भगवन् ! कथमेवं वक्तुं युज्यते, यावता ब्रह्म अद्वितीयम्

असंसारि च, अहं च तद्विपरीत इति तयोरभेदप्रत्ययो बाधित एव, बाध-विरहरूपायाः योग्यताया अभावात् तादृशः प्रत्यय एव न जायेत, यथा गौरश्व इत्यादौ ।

गुरुः—वत्स ! सोऽयं देवदत्त इत्यत्र यथा अखण्डैकव्यक्तेर्बोधस्तथा-ऽत्रापि कर्तुं यतस्व ।

शिष्यः—भगवन् ! तत्र अभेदबोधेऽपि सखण्ड एव वाक्यार्थबोधः ? अत्र तु अखण्डबोधे किं गमकं स्यात् ? ।

गुरुः—वत्स ! सावधानो भव, अखण्डसखण्डपदार्थे न विभ्रमः, कथमपि सोऽयं देवदत्त इत्यत्र एवम् अभेदप्रत्ययः सम्पाद्यतां येन 'अयं स न' इति भ्रमः 'अयं सो न वा' इति संशयश्च निवर्तेत, यत एतादृश-भ्रमसंशयनिवृत्तये तादृशं वाक्यमुपयोज्यते, तत्र तत्कालविशिष्टः सशब्दस्य एतत्कालविशिष्टः अयं शब्दस्य वाच्यार्थः, तत्कालैतत्कालयोर्विरोधा-द्वाच्यार्थयोरभेदो न संभवतीति मुख्यार्थबाधात् लक्षणा उपास्या, विरोधपरिहाराय विरुद्धांशयोः परित्यागे उभयपदप्रतिपाद्या एका देव-दत्तव्यक्तिरेव लक्ष्यार्थोऽवशिष्यते, न च एकस्मिन्नेकस्य कश्चित् संसर्गः किन्तु प्रातिपदिकार्थमात्रम्, अतः चित्सुखीदिशा संसर्गानवगाहितया प्रातिपदिकार्थमात्रावगाहितया वा अखण्डार्थबोध इति व्यवह्रियते । सैव गतिरत्र तत्त्वमसीति वाक्येऽपि, तथाहि मायोपाधिकं चैतन्यं तच्छब्दस्य अवस्थाऽज्ञानोपाधिकम् अन्तःकरणोपाधिकं वा चैतन्यं त्वम्पदस्य वाच्यार्थः, तयोरभेदःप्रत्यक्षबाधित इति लक्षणायाम् उपाध्यंशयोः परित्यागे चैतन्य-मेवैकं पदद्वयार्थोऽवशिष्यते, तस्य च बोधे संसर्गस्याविषयतया प्राति-पदिकार्थमात्रस्य विषयतया च अखण्डार्थत्वं निर्विकल्पकत्वञ्च । इति सद्युक्तिभिर्मन्यस्व । इति

अत्र नाधिक्षेपवचांस्येव अपितु पदानि पदार्थाः पद्यानि वाक्यानि च बहूनि विद्वन्मूर्धन्यश्रीमधुसूदनसरस्वतीमुनीनामेव, अत्रत्यं कलाकौ-

विद्यमपि श्रीमतामेव प्रधानतां बिभर्ति, मम तु अल्पीयः, अतो दर्शनान्यतरविषयकपक्षे लेखकः पातयितुं न प्रयतनीयं पाठकैः। सरस्वतीमहोदयानां वैदुष्यकला पाठकमनः कलानिधिं स्पृशतु इति ममाय श्रमः। अत्र उदयनाचार्यपद्ययोः कश्चित्पाठभेदो नैयायिककोविदानां स्फुरेत्, तत्र वेदान्तधिया 'त्वयैकात्मतताम्' इति कृतम्। व्यायविदुषां तु 'त्वदेकाग्रताम्' इति समीहितमिति विशेषः, अन्यत्तु न किञ्चित्करम्। इति।

नैयायिकान् प्रति

**प्रयत्नैरस्तोकैः परिचितकुतर्कप्रकरणाः**
**परं वाचो वश्यान्कतिपयपदौघान्विदधतः।**
**सभायां वाचाटाः श्रुतिकटुरटन्तो घटपटा-**
**न्न लज्जन्ते मन्दाः स्वयमपि तु जिह्रेति विबुधः॥**

श्रीकुन्दनलाल जैनः

# जैनवैष्णवसंस्कृत्योः संगमस्थली--पठारी

मध्यप्रदेशस्य बीनाविदिशानगरयोः मध्ये स्थितः ग्रामैकः पठारीति-नाम्ना प्रथितोऽस्ति। ग्रामोऽयं विन्ध्याटवेः श्रेण्योपरि तिष्ठति, विदिशा-मण्डलस्य च ग्रामैकोऽस्ति। विदिशासम्राजो देवानां प्रियस्य अशोकस्य विहारस्थली आसीत्। विदिशायाः समीपस्थेषु सांचीस्तूपेषु महात्म-बुद्धस्य प्रमुखशिष्ययोः सारिपुत्रमहामौग्गलायनयोः चास्थीनी निक्षि-प्तानि सन्ति। अतः सकलोऽयम् प्रदेशः इतिवृत्तात्मकदृष्ट्यातीव महत्त्वपूर्णो वर्तते। विक्रमस्य सप्तदशोत्तरनवशतवर्षे (सं० ९१७) पठारी ग्रामे राष्ट्रकूटवंशावतंसः कर्कराजपुत्र परबलः प्रशास्ति स्म, येनात्र गरुडध्वजस्तंभः (भीमगजा इत्यपि प्रथितः) विष्णु मंदिरस्य समक्षे स्थापितः कर्कराजः जेजानाम्नो राज्ञः पुत्र आसीत्, येन शाकंभरानृपं नागावलोकं पराजित्य तस्य राज्यं स्वीचक्रे। जेजा राष्ट्र कूटवंशस्यात्र प्रथमशासक आसीत्।

अस्य स्तम्भस्योपरि एका विस्तृता प्रशस्तिः सूत्रधारसाहिले-नोत्कीर्णा विद्यते। अस्यां प्रशस्तौ स्रग्धरा, शार्दूलविक्रीडित, शिख-रिणी, उपजाति, मालिनी, वसन्ततिलकादिच्छन्दःसूपनिबद्धाः द्वात्रिंशत् श्लोकाः सन्ति। यद्यपि इयम् प्रशस्तिः अनेकेषां वर्षाणाम् उष्मणा, शीतेन जलवृष्ट्या च सर्वथा अपठनीया अस्पष्टा चाभवत्। श्री कनिंघम महोदयः शतैकवर्षपूर्वं यदा अत्रागच्छत् सोऽपि इमं स्तंभ-मस्मिन्नेव रूपेऽलभत। अतः स येन केनापि प्रकारेण वैज्ञानिकसाधनैः इमम् प्रस्तरलेखं पठित्वा 'इपिग्राफिका इंडिकायाः' नवमभागे पंचा-शदुत्तरद्विशतपृष्ठे च प्रकाशितवान्।

अयं शिलालेखः अष्टत्रिंशत्पंक्तिषु विद्यते प्रत्येकपंक्तौ च सप्तत्यक्षराणि सन्ति पुरातत्त्वदृष्ट्या अयम् ग्रामोऽतीवमहत्त्वपूर्णः दर्शनीयश्च विद्यते। अत्रानेकानि ऐतिहासिकस्थलानि विद्यन्ते। यथा १) एकस्मिन् जिनालये भगवतः ऋषभदेवस्य दशहस्तोन्नता मनोज्ञा खड्गासनप्रतिमास्ति, या मुगल शासक शाहजहाँ शासनकाले चौ० रामचन्द्रः बघौरा वास्तव्यः प्रतिष्ठापितवान् (२) विष्णुमंदिरम् (३) बडोह ग्रामस्य चतुर्विंशतितीर्थंकराणां कलापूर्णजिनालयानि (४) अष्टमनवमशताब्द्यां खजुराहो शैल्याम् निर्मितम् गडरमलस्य मंदिरम् (५) दशावतारमंदिरम् (६) षोडशस्तंभभवनं यत् विशालतडागतटे स्थितम् अस्ति। ज्ञायते यत् पुरेदं सार्वजनिकप्रमोदस्थलं भवेत्। (७) गरुडध्वजस्तम्भः इत्यादि प्रमुखऐतिहासिकस्थलानि दर्शनीयानि सन्त्यत्र।

अस्मात्ग्रामात्किञ्चिद्दूरे बडोहनामकस्थानमस्ति, यत्र चतुर्विंशतिजैनतीर्थंकराणामतिकलापूर्णाः खड्गासनेषु पद्मासनेषु च स्थिता बह्व्यः प्रतिमाः सन्ति। तासां विशालानि जिनालयानि च सन्ति, यानि जर्जरावस्थायां विद्यन्ते। जीर्णोद्धारस्यात्र विशेषावश्यकता विद्यते। ज्ञायते यत्स्मिन् काले बडोहः जैनसंस्कृतेः पठारी च वैष्णवसंस्कृतेः श्रेष्ठे केन्द्रे आस्ताम्। द्वयोः संस्कृत्योराराधकाश्चापि परस्परं सहयोगेन शान्त्या च प्रतिवसन्ति स्म। जैनवैष्णवयोरत्र कोऽपि विरोधः नासीत्। स्वस्वक्षेत्रेषु द्वेऽपि संस्कृती स्वरूपविकासं कुरुतः स्म। जैनवैष्णवसंस्कृत्योः गङ्गायमुनाप्रवाहः अत्र प्रवहति स्म। प्रस्तूयतेऽत्र पठारीस्थितगरुडध्वजस्तम्भोपरि लिखितप्रशस्तेर्मूलप्रतिलिपिः।

पठारी ग्रामस्थित गरुडध्वजस्तम्भ (भीमगजा) प्रशस्तिः—।

स्रग्धरा–

लक्ष्मीनीरन्ध्रप्रीतस्तनकलसलसत्पल्लवावृत्तशत्रो-
स्त्रैलोक्यस्वाम्यदीक्षाविधिवरगुर्वोऽरिष्टनासप्रचण्डः ।
दोर्दण्डः केसिकेसग्रहरुचिररुताघुष्टहिमस्रांशदेसाः
दैत्येभस्थलकुम्भदलनाद्रिधः पान्तु वस्ते मुरारेः ।१

शा० वि०

वालार्कच्छविचक्रवालविमलाव्यालाहता वेष्टिताः,
कर्णालम्बितकुण्डलोज्ज्वलधराच्छेदावदाताच्छविः ।
सत्कारात्तस्वराकुतानिर्गतव स्निग्धेन्द्रनिलोपास्तम्भः,
स्कन्धागापाद् मार्गयुगलः कृष्णोऽस्तु वः श्रेयसे ।२

आर्या

त्रिभुवननभवानस्तम्भो नभस्तलाम्भोधिसेतु अघदहनः ।
ब्रह्मान्दमान्दलाम्भुजदण्डरुचिरं जयति हरिचरणः ।३

आर्या गीतिः

अहिङ्कराचक्रकुवलयविलासात्कमलालयः सदा नवकायः
जलनिधिरिव हरिखलत् पुराणपुरुषोऽपि यः सदानवकायः ।४

शा० वि०

राजासीद्वरचक्रलाञ्छितकरो लक्ष्मीसनाथः पुरा
दृप्तारिप्रबलादविशत्प्रमथनश्चाधारभूतो भुवः ।
बाहूदस्तमहीधरो नरकहा तुंगद्विपध्वंसकृत्
कंसारातिसमोपम्य कृष्णतनुभिच्छ्री जेजार्यैः स्तुतः ।५

आर्या

राम्या प्रसूतिराच्छिद्रास्तुंग प्रथुरकान्तकः ।
श्रीराष्ट्रकूटवंशोऽयं समृद्धो यत्राभूत्भृतिः ।६
जित्वाविविककरिघटाप्रभूतराकर्णनाट्भटसहस्त्रणीः ।
पृथुलाटाख्यं राष्ट्रं लब्धं यस्याग्रजेनाजौ ।७

मालिनी

वनमहिषमसह्यं वाजिनो लोलनेत्राः,
मदगलितकपोला दन्तिनः सिंहमुग्रम् ।
ज्वलितपवनकीर्णा वैरिवीराः कृतान्तम्,
रणशिरसि यमेकं मेनिरे नैकरूपम् ।८

अनुष्टुप्

एकोऽपीनस्तातः कुर्वन्नारातिकुलमाकुलं ।
चारुचामीकरोपेतो नीलरूपं विभाति यः ।९

वसन्ततिलका

प्राप्तोच्छायाप्रकम्पान्मुक्तालिभिः,
स्वमहिमाप्रतिपादनाय ।
देशान्तराण्युपगता-विकला-दिशासु,
यस्य ध्वजा इव सदा रिपवो भारमन्ति ।१०

वसन्ततिलका

दुर्व्वारवैरिवरवारणकुम्भमुक्त—
मुक्ताफलप्रकरनिर्म्मलदान्तमाला ।
नागावलोकनृपवेश्मनि विप्रकीर्णे
यस्योद्धतम् प्रहसदिव कृपाणपाली ।१५

अनुष्टुप्

सकलीकृतसर्वाङ्गा नानाभरणभूषिताः ।
दृश्यन्ते रिपवो यस्य नानाभरणभूषिताः ।१६

वसन्ततिलका

यस्योत्पलच्छविमुषा स्वजलोन्नतेन,
खड्गेन तुङ्गतरभूमिभृतं शिरस्सु ।
धारानिपातजनितैः सृजा प्रवाहैः
युद्धे महाप्रलयकालघनप्रतीतिः ।१७

मालिनी

अहिमकर इवाद्य त्यक्तदोषानुसंगो
हिमकर इव जातः शुद्धमूर्तिः कलावान् ।
परबलदलनोग्रानुग्रचक्षुः प्रतापी
परबल इति पुत्रस्तस्य शास्तीह भूमिम् ।१८

श्लोकः

त्यक्तवामायामदम्भसक्तकार्तस्वरा सदा ।
भुञ्जते श्रीफलान्यस्य सुहृदो विद्विषोऽप्यलम् ।१९

द्रुत वि०

मकरकेतुतुलाहृतसुंदरोजनविलोलितलोचनभालया ।
स्वशुचिभूषणवर्षमलीनयामरपुरेन्द्रसमो भुवि योऽभवत् ।२०

उपजातिः

प्रभञ्जनो वैरिमहीरुहाणां समाश्रितानां धनदो जनानां ।
दीनातुराणां सकृपो नृपाणां एकोऽपि योभूच्चरितैरनेकः ।२१

श्लोकः

विषयेभ्यः परित्यज्य विग्रहदण्डलीलया ।
इन्द्रियाणीव येनाशु जितान्यरिबलान्यपि ।२२

मालिनी

सुरगुरुरिव सम्यङ् मम तृषात्तधानः
सुरपतिरिव हेला दारितारातिगोत्रम् ।
सुरगज इव नित्यं सान्द्रदाने प्रवृत्तः
सुरगुरुरिव भूभृन्मान्दलोत्कृष्टभूतः ।२३

वसन्ततिलक

ज्यारवाकृष्टाद्रि···धक्कार्मुकं
दलाग्रभिन्नेभकुम्भभवलोहितकीर्णहारा ।
पालिध्वजाम्भुजलतासितवनमाला
यस्या जिगाय रणमूर्ध्नि राजलक्ष्मीः ।२४

उपजातिः

अस्वीकरददेवकुलं सा सौरेरिदमहिमोर्व्विधरश्रृंगतुल्यम् ।
शुभाग्रविन्यस्तसितध्वजालि बिभर्तियस्यामरसिन्धुशोभाम् ।२५
स्तम्भस्तु यादृग्गरुडध्वजाद्रौ पुरा विशालो गरुडध्वजोऽयम् ।
हरेः पुरस्ताद्रि सा एव तेन स्तम्भः समुत्तम्भित एष राज्ञा ।२६

शा० वि०

विष्णोः किं चरणस्त्रिविक्रमकृतेः स्तम्भाकृतेर्वा वपुः
स्थाणोः भुवीव राहरफणीन्द्ररिपून्नशेषोऽथवा प्रोथ्रितः ।
इत्थं भूरि विचारयद्भिरमरैरालोक्य निश्चित्य ते
स्तम्भः शुद्धशिलामयः परबलः क्ष्मापालः कृतिप्रदः ।२७

स्रग्धरा

तस्यामात्यो बभूव क्षितिपः सर्वधर्माधिकारी
हेमाभः सत्यवादी परबलनृपतेः मूर्धवन्द्यः प्रधानः ।
तेनोत्तुंगाश्मबाहुः मधुमथनपुरो वैनतेयोपलक्ष्यः
स्तम्भः संस्तम्भितारेरुपहसितयुगः स्तम्भ उत्तम्भितोऽयम् ।२८

उपजातिः

प्रकृष्टवर्णः...वंशे स्वभावे सम्पादित-संभ्रमो यः ।
हर्षेण पद्यैः रचिता प्रशस्तिः मुक्ताफलालिश्रियमातनोति ।२९

शिखरिणी

प्रवीणां गम्भीरां विविधपदविन्यासचतुरां
द्रिधोदारग्रन्थम् आविबुधजनदुर्ज्ञानहृदये ।
प्रशस्तिमाधुर्यप्रभृतिगुणांशदोहा
रुचिराशुरास्त्रारिवाभाति स्फटिकविमलस्तम्भलिखिता ।३०

श्लोकः

उत्कीर्णा सूत्रधारेण साहिलेन स्फुटकाक्षरा ।
चित्राङ्गवागव्यग्रवर्णना सरस्वतीव भासते ।३१

शा० वि०

यावत्...जितो लक्ष्मी स्थितोरस्थले
देहार्द्धे गिरिशस्य हेमगिरिजा शेषोत्तमाङ्गे क्षितिः ।
चञ्चच्चन्द्रमरीचिभासुरजला यावद्दिवि स्वर्धुनी
तावत्कीर्तिरंशस्वरास्तु नृपतेः भूम्यास्तले श्रीमती ।३२

संवत् ९१५ चैत्र सुदी–६ शुक्रे ॐ नमः ।



# एकविंशतिशताब्दी : द्वाविंशतिशताब्दी

## प्रथम दृश्यम्

( दिल्ली-विज्ञान-अनुसन्धानशालायाः बहिः जनसमूहः एकत्रितः। विविधध्वनि-मध्ये वार्तालापस्वर आविर्भवति। )

**एका व्यक्तिः**—इदानीं तु समयः सम्पद्यते।

**द्वितीया** - अधुना विलम्बो नैवास्ते।

( ध्वनिविस्तारकयन्त्रमद्धशः चं चं ध्वनिसहकृतः 'शृणुत' 'शान्ता भवत' इति तीव्रध्वनिः श्रूयते पुनश्च निस्तब्धता जायते )

(ध्वनिविस्तारकयन्त्रम्) सज्जनाः! ब्रह्माण्डस्य अस्मिन् नक्षत्रे या घटना संजाता सा अस्य युगस्य महती वैज्ञानिकी उपलब्धिः। अद्यतः शतवर्षपूर्वम् अद्य एव दिने तत्कालीनभारतराजधानीदिल्लीनगरस्य अस्मिन्नेव विज्ञानभवने ज्ञानव्रतनामा एकः चत्वारिंशद्वर्षीयः स्वतन्त्र-विचारकः वैज्ञानिकप्रक्रियाद्वारा आगामिशतवर्षाणां कृते हिम इव स्त्या-नत्वमापादितः। अद्य तस्मिन्नेव शरीरे पुनः प्राणसंचरणं विधीयते। ब्रह्माण्डस्य महान्तो वैज्ञानिकाः पर्यवेक्षकाश्च कार्येऽस्मिन् संलग्नाः सन्ति। यदि वयं सफला जातास्तर्हि श्रीज्ञानव्रतमहोदयाः अस्माकं मध्ये विंशतितमाया एकविंशतितमायाः शताब्द्याः श्रृङ्खलारूपाः सेत्स्यन्ति। ( ध्वनिविस्तारकं यन्त्रं शान्तिमिवाकलयति। जनसमूहध्वनिरुच्चरति। किन्तु ध्वनिविस्तारकयन्त्रस्य पुनरुच्चारणसमकालमेव निस्तब्धता व्याप्नोति। )

शृण्वन्तु, शान्ता भवत क्षणम्। श्री ज्ञानव्रतस्य यद्रक्तं शुष्कतां नीत्वा पुटकेषु [डिब्बों में] सुरक्षितमासीत् तदधुना पुनरपि द्रवरूपेण

तस्य शरीरे प्रवेश्यते। तेषां सर्वतः संलग्नानि बृहदाकाराणि छायाग्राहकयन्त्राणि प्रत्येकक्षणस्य चित्रं गृह्णन्ति। यदि वयं सफलितास्तर्हि सम्पूर्णां प्रक्रियां भवन्तो निजगृहस्थिता एव छायाचित्रे युक्तध्वनियन्त्रेण [टेलीविजन] अवलोकयिष्यन्ति। श्रीज्ञानव्रतस्य शरीरे रक्तसंचरणं तीव्रगत्या जायते। शिराः धमन्यश्च स्वकीयं कार्यं कर्तुं प्रवृत्ताः। धैर्यमातिष्ठत। साधुवादं स्वीकुर्वन्तु। श्री ज्ञानव्रतस्य हृदये गतिरारभ्यते। श्वासप्रश्वासक्रिया अपि चैतन्यमाश्रयते। अस्माकं वैज्ञानिकाः आशान्विताः जाताः। इदानीं कतिचित्क्षणानां कृते विश्रामो ग्राह्यः (ध्वनिवर्धकध्वनेरुपरामानन्तरमेव जनसमूहस्वराः उत्तिष्ठन्ति। उत्तरोत्तरं कोलाहलो वृद्धिं गच्छति। क्षणान्तरात् पश्चात्) शृण्वन्तु। भवन्त इदं ज्ञात्वा प्रसन्ना भविष्यन्ति यत् श्रीज्ञानव्रतशरीरमिदानीं प्रसन्नतामनुवर्तते। प्रकृतिस्थं च सम्पन्नम्। ते चेतनामधिगतवन्तः। उत्थाय च उपविष्टाः। तेषामुत्थानानन्तरमेव अस्माकं विश्वाध्यक्षः श्रीसोमणप्रतिनिधिः श्रीभास्करमहोदयः तदीयमभिवादनं कृतवान् तथा च विश्वाध्यक्षस्य शुभकामनाम् अर्पितवान्। ज्ञानव्रतो नितरामस्वस्थतां प्रतिपद्यते। पुनरपि ते महोदयाः शयिताः। अस्माकं वैज्ञानिकाः अभिप्रयन्ति यत्तेषां कृते न्यूनान्न यूनं मासत्रयस्य विश्रामोऽपेक्ष्यते।

एका ध्वनिः वयं तेषां साक्षात्करणमभिलषामः।

द्वितीया ध्वनिः—वयं तेषां दर्शनं करिष्यामः।

ध्वनिविस्तारकयन्त्रम्—श्रीज्ञानव्रतस्य स्वास्थ्यमीदृशं नास्ति यत्ते भवतामाग्रहं स्वीकुर्वन्तु।

एका ध्वनिः—वयं तद्दर्शनमवश्यं करिष्यामः।

द्वितीया ध्वनिः—प्रबन्धं सम्पादयन्तु अन्यथा उपद्रवो भविता।

ध्वनिविस्तारकयन्त्रम्—शान्ता भवन्तु। मौनमातिष्ठन्तु। श्रीज्ञानव्रतमहोदया आगच्छन्ति। श्रीभास्करः जीवशास्त्री डाक्टरशीलमहोदयश्च तस्मै आश्रयं दत्तवन्तौ। शान्ता भवन्तु।

(उपरिस्थितवलभ्यां क्रमशो वलयमिवारोहावरोहसमन्वितमधो-वस्त्रं वसानः कृष्णवर्णम् अंगरक्षकं गान्धीटोपिकां च दधानः श्री-ज्ञानव्रतः भास्कर डा० शीलयोराश्रयं गृह्णन् समागच्छति हस्तौ संयोज्य भारतीयशैल्या च नमस्करोति।)

**ज्ञानव्रतः**—सम्पूर्णायाः शताब्द्या अनन्तरम् अद्य दिवसे सूर्यदर्शनं कृत्वा भवतः कृतज्ञतामहं धारयामि। यदि च ईश्वरेच्छा भविष्यति तर्हि मास-त्रयादनन्तरम् भवतां सेवायां पुनरपि उपस्थितो भविष्यामि। (प्रस्थानम्)

**एका ध्वनिः**– काऽयमीश्वरः ?

**द्वितीया ध्वनिः**—अस्माकं विश्वाध्यक्षस्य कोऽपि उपाधिर्भविष्यति।

(पटाक्षेपः)

## द्वितीयं दृश्यम्

तस्मिन्नेव दिने प्रयोगशालायाम्

(विविधौषधियन्त्राणां मध्येगतः एकस्यां विश्रान्तिआसन्दिकायां ज्ञानव्रतः शयानस्तिष्ठति। समीपस्थासु आसन्दीषु त्रयो जीवशास्त्रिणो पृथिव्याम् एव सन्ति उपविष्टाः।)

**ज्ञानव्रतः**—(क्षीणस्वरेण) बुभुक्षा मां लगिता।

**डा० बाटः**—(डा० चिनं प्रति) बुभुक्षा ?

**डा० चिन**— (डा० शीलं प्रति) बुभुक्षा ?

**डा० शीलः**– (ज्ञानव्रतं विलोक्य) बुभुक्षा ?

**ज्ञानव्रतः**—आम्। बुभुक्षा, भोजनमपेक्ष्यते मया। भवन्तः कथं नो अवगच्छन्तियत् अहं शक्तिक्षीणतामनुभवामि।

**डा० शीलः** –(अहो ? शक्तिः ? गृह्णातु इमां गुटिकां निगिरन्तु (गुटिकां ददाति)

**ज्ञानव्रतः**—(गुटिकां गृहीत्वा) जलं पाययन्तु।

[अग्रिमाङ्के समाप्यम्]



# संस्कृत-जगत्



## सागर-विश्वविद्यालये संस्कृत-नाट्यसमारोहः

सागर-विश्वविद्यालये संस्कृत-परिषदा समायोजिते दिनत्रयनाट्य समारोहे द्वे संस्कृतनाटके संगीतिकैका चाभिनीतानि। कलिकतानगरस्थप्राच्यवाणीकलाकारः डा० रमा चौधरी-महोदया निर्देशने स्वर्गीय-यतीन्द्रविमलचौधरी-विरचितस्य मीरामधिकृत्य अमरमीरं नाम्नो नाटकस्य आद्यशंकराचार्यमधिकृत्य डा० रमा-चौधरी देव्या ग्रथितस्य शङ्करशङ्करमिति नाटकस्य चाभिनयः सम्पन्नः। मीराया भूमिकायां चक्रवर्तीज्योतिर्मयी तथा शङ्कराचार्यस्य भूमिकायां चट्टोपाध्याय-अनिंद्यसुन्दरस्य चाभिनयोऽतीव श्लाघ्यो रोचकश्चाभूत्।

तृतीयदिवसे सागरविश्वविद्यालयस्य कलाकारैः प्राध्यापिकया डा० वनमाला-भवालकर इत्येतया विरचिता निर्देशिता च रामवनगमनम् नामैका संगीतिका अभिनीता। विविधच्छन्दःसु निबद्धाया दृश्यत्रयात्मिकाया अस्या संगीतिकायाः स्वररचना भावानुरूपरागतालैः सुसम्पादिता। सरलसंस्कृतभाषया मधुर-संगीतेन मनोहरिणा नेपथ्येन समन्वितोऽभिनयः दर्शकानां सम्यगनुरंजनायासीत्। संस्कृतानभिज्ञा अपि आद्यन्तं नाटयरसास्वादनपरा आसन्। पौराणामनुरोधेन अस्याः संगीतिकाया अभिनयः पुनश्च सागरनगरे समायोजितः। श्रीमती सुमनलताश्रीवास्तवः, कुमारी मनोरमा सक्सेना, श्रीमती सुधाखरे कुमारी मायाशृंगी तथा श्रीमती कुसुमजटारः क्रमशः कैकेयी-मन्थरा-कौसल्या-सीता-सुमित्राणां भूमिकासु अभिनीतवत्यः। पुरुषपात्रेषु यशवन्त जोशी रामकुमार चतुर्वेदी, अतुलमेहरः रविमिश्रश्चेत्येते राम-दशरथ-लक्ष्मण-वसिष्ठानां भूमिकाः क्रमशः धृतवन्तः। श्रीमती सुमन

लताया अभिनयो भूरि प्रशंसितः सुवर्णपदकैः परितोषितश्च । संस्कृतानभिज्ञैरपि कतिपयगात्रैः शुद्धं संगीतमभिनयश्च कृते इति संस्कृतस्याधुनिकभाषामूलत्वेन प्रसाधितम् ।

—मन्त्री, संस्कृत परिषद्, सागर विश्वविद्यालयः

## आचार्यदण्डिनः काव्यादर्शस्य प्रशंसार्हं बृहद्नुशीलनम्

ऐषमः (१९६७ ख्रीस्ताब्दे) प्रयागविश्वविद्यालयेन संगमन्याः सहसम्पादकाय श्रीजयशङ्करत्रिपाठिने तस्य 'ए क्रिटिकल इवैल्यूशन आफ दण्डिन्स काव्यादर्श' नामकं शोधप्रबन्धमुद्दिश्य डी० फिल्० इत्युपाधिः प्रदत्ता । श्रीत्रिपाठिना स्वशोधप्रबन्धस्य माध्यमेन संस्कृतकाव्यशास्त्रेतिहासस्य नव्यं पर्यालोचनमकारि । तेन सर्वप्रथमं विगतार्धशताब्द्यां निर्णीतस्यास्य विषयस्य मानदण्डं नवीनदृष्ट्यापर्यालोचयितुं विकल्पः प्रस्तुतः । त्रिपाठिनः श्रमस्य मेधायाश्च प्रशंसा कार्या । तस्य अनेकासु मान्यतासु—दण्डिनः काव्यादर्शस्य मूलपाठः द्विपरिच्छेदात्मकः, दण्डिनः समयः ईस्वीयचतुर्थशताब्द्या मध्यभागः, सेतुबन्धमहाकाव्यस्य रचयिता वाकाटकसम्राट् प्रवरसेनप्रथमः—इत्यादिमान्यताः संस्कृतकाव्यशास्त्रस्येदानीं यावत् निर्धारितां रूपरेखां न केवलं प्रभावयन्ति अपितु तस्य वैषम्याणि समीकुर्वन्ति । त्रिपाठिमहोदयमेतत् श्रमाय वयं वर्धापयामस्तथा साफल्याय हृदा अभिनन्दाम. ।

हर्षस्य विषयोऽयं यत् डॉ० जयशङ्करत्रिपाठिनः सम्मानार्थं ५-३-६७ दिनाङ्के एका विचार गोष्ठी श्रीमन्नारायणद्विवेदिनो रामबाग, प्रयाग—निवास स्थाने आयोजिताऽभवत् । तस्यां प्रधानातिथिः डॉ० हरवंशलाल शर्मा अलीगढ़विश्वविद्यालय-प्राध्यायको दण्डिनः काव्यादर्शस्य सांगोपांगानुशीलनं प्राशंसत् तथा व्याहरत्—'संस्कृतकवयः काव्यशास्त्रीयरीत्यतिरिक्तं जनमनसाम् आन्दोलनकं लोकभाषाकाव्यमपि प्राणयन् । तस्या-

ध्ययनमद्यापेक्षितं वर्तते। आचार्यदण्डिनः काव्यादर्शस्य साङ्गोपाङ्गानुशीलनात्मकं महत्त्वपूर्णकार्यं विधाय डॉ० जयशङ्करत्रिपाठिना तस्याचार्यस्य काव्यशास्त्रीयमान्यताः पुनर्व्याख्यातुं साधुः प्रयासोऽकारि। दण्डिनः कालस्य विवादास्पदे पक्षेऽपि यानि तथ्यानि तेन दत्तानि तैः अनुसन्धानस्य नवीनानि क्षेत्राणि उद्घाटितानि स्युः।'

तस्मिन्नवसरे काव्यादर्शं संस्कृतकाव्यशास्त्रं च विषयीकृत्य परिसंवादगोष्ठी समभवत्। तस्यां डॉ० त्रिपाठिना स्वमान्यतासम्बद्धं सारगर्भितं वक्तव्यमदायि। गोष्ठ्यां भागं गृहीतवत्सु जनेषु प्रमुखा इमे आसन्—श्रीप्रभातशास्त्री, श्रीतारिणीशझाः, श्री श्रीधरशास्त्री, डॉ० राजेन्द्रप्रसाद मिश्रः, डॉ० राजकिशोरसिंहः, डॉ० सूर्यनारायणपाण्डेयः, श्रीगोविन्द जी, श्रीरामेश्वरमेहरोत्रा, श्री श्रीमन्नारायण द्विवेदी, श्रीराजकुमारशर्मा, श्रीमोहन जी मेहरोत्रा।

—मन्त्री, संस्कृत साहित्य परिषद्, प्रयागः

## संस्कृतशिक्षासम्बन्धे विचारगोष्ठी

प्रयागस्थ-संस्कृतसाहित्यपरिषदस्तत्त्वावधाने संस्कृतपाठशालाध्यापकानां विदुषां च द्विदिवसीयैका विचारगोष्ठी हिन्दीसाहित्य-सम्मेलनस्य सत्यनारायणकुटीरे (१९-२० मईदिनाङ्के) समपद्यत। उभयोर्दिनयोर्गोष्ठ्या आध्यक्ष्यं क्रमशः संस्कृतपाठशालानिरीक्षकाः पण्डितप्रकाशचन्द्रगौडास्तथाप्रयागविश्वविद्यालयस्य भूतपूर्वसंस्कृतविभागाध्यक्षाः प्राध्यापकाः पण्डितसरस्वती प्रसादचतुर्वेदिनः समकार्षुः। गोष्ठ्यां बाँदा-फतेहपुर—प्रतापगढ-सुलतानपुर-रायबरेली-जौनपुर-प्रयागादिमण्डलाना संस्कृत पाठशालाध्यापकाः भागमगृह्णन्। गोष्ठ्या विचारणीयेषु विषयेषु द्वौ मुख्यौ आस्ताम्—(१) संस्कृतशिक्षायां प्रवेशं पातुं वाराणसेय-संस्कृत विश्वविद्यालयस्य प्रथमा-परीक्षायाः पाठ्यक्रमस्य किं स्वरूपं निर्धारणीयं येन संस्कृत शिक्षाया लोकप्रियतां वर्धेत तथा संस्कृतशिक्षाया मूलभूतो

गरिमाऽपि सुरक्षित स्तिष्ठेत् (२) संस्कृतपाठशालासु विद्यार्थिनां संख्यावृद्धेः के के उपाया भवितुमर्हन्ति।

गोष्ठ्यां संस्कृतपाठशालाध्यापकाः सुरुचिपूर्वकं स्वं स्वं विचारं प्राकटयन् तथा विचारणीयविषयैः सम्बद्धानि समस्याकाठिन्यानि निराकर्तुं परामर्शमप्यददुः। सर्वैर्व्याख्यातृभिः संस्कृतशिक्षां राष्ट्रस्य महतीमावश्यकतां स्वीकुर्वद्भिः तत्प्रोत्साहनार्थं विविधेषु पक्षेषु विमर्शो व्यधायि। प्रथमा-परीक्षयाः पाठ्यक्रमसम्बन्धे विस्तरेण विचारोऽभवत् तथा वर्तमान पाठ्यक्रमे परिवर्तनार्थमुपाया निरदिश्यन्त। सर्वसम्मत्या गोष्ठीसंयोजकं संगमनीसंस्कृतत्रैमासिक पत्रिकायाः सम्पादकं श्रीप्रभातशास्त्रिणं सा परिषद् गोष्ठीनिर्णयानां कार्यान्वयनार्थं वाराणसेय-संस्कृत-विश्वविद्यालयाधिकारिणां तथाऽन्याधिकारिणां पुरतः प्रस्थापनार्थं च न्ययोजयत्। गोष्ठीनिर्णयस्य सारांशः इत्थम्—(१) प्रथमापरीक्षापाठनं साधनसम्पन्नं कर्तुं प्रयत्नो विधेयः, तथाऽस्याः परीक्षायाः पाठ्यक्रमोऽपेक्षाकृतः सरलीकार्यः। (२) संस्कृतपाठशालासु विद्यार्थिनांसंख्यावृद्ध्यर्थं प्रचारकार्यस्य साधनमग्रहीतव्यम्, विद्यालयाः स्वयं विज्ञापनपत्राणि प्रकाशयेयुः, शिष्टमेलापकेषु संस्कृतशिविराण्यायोज्यानि, व्याख्यान-कुशलैर्महात्मभिर्मनीषिभिश्च संस्कृताध्ययनार्थमुपदेशो दापनीयः आकाशवाणीतो भूयस्त्वेन संस्कृतशिक्षाप्रसारात्मकः कार्यक्रमो विधेयः।

—संयोजकः, संस्कृत-विचार-गोष्ठी

## ब्रह्मसूत्रशाङ्करभाष्यम् (चतुःसूत्रीपर्यन्तम्)

(भामतीटीकया, तस्या हिन्दीभाषान्तरेण च युक्तम्) हिन्दी-भाषान्तरकारः—पं० सरयूप्रसाद उपाध्यायः (प्रधानाचार्यः मीरजापुरम्), वितरकः, भारतीयविद्याप्रकाशनम्, पो० बा० १०८, कचौड़ी गली, वाराणसी। पृष्ठसंख्या ३४६। मूल्यम्, रु० ६·००।

संस्कृतभाषायां दर्शनवाङ्मयस्य विपुला परम्परा, प्राचीनतम इतिहासः, महती चोपलब्धिः वर्तन्ते। तत्र दर्शनविवेके सृष्टितत्त्वानां जगद्विज्ञानस्य च मीमांसा ऋषिभिः अकारि। तेषां दर्शनग्रन्थानां विवेचन-पद्धतिः, भाषा-प्रयोगश्च सर्वथा इतरवाङ्मयेभ्यः तान् विभाजयतः। अतएव अन्यासु भाषासु तेषां भाषान्तरं बहु दुष्करं भाषावैदुष्यसाध्यं च भवति। एतेनैव ब्रह्मसूत्रशाङ्करभाष्यस्य भामतीटीकायाश्च हिन्दीभाषान्तरप्रयासम् अनुभवामः, तञ्च प्रशंसामः। पठित्वा च मोदं लभामहे।

भाषान्तरकार उपाध्यायमहोदयः एतद्विषयस्य अधिकारी विद्वान्, संस्कृतभाषायाः सेवायामनुरक्तः शिक्षकश्चास्ते। स भाषान्तरविषयस्य बाधाम् अनुभूय यथाशक्ति अस्मिन् भाषान्तरे सुबोधतां विषयस्फुटत्वं च स्थापितवान्। अतएव भाषान्तरम् अधीत्य छात्राः, गवेषकाः, मुमुक्षवश्चापि लाभान्विता भविष्यन्ति इति आशास्महे। संस्कृत-दर्शन-ग्रन्थानां भाषान्तरकार्ये शब्दप्रयोगाणां यादृशी दुष्करसमस्या आपतति सा भाषान्तरकार्येणैव दूरीभाविष्यति। उपाध्यायमहोदयस्य एतत्कार्यमपि समस्यानिवारणे सौविध्यं प्रस्तौति, तदर्थं हिन्दीभाषान्तरकाराय उपाध्यायमहोदयाय अनेके साधुवादाः।

इदं तु खेदकरं यदस्मिन् पुस्तके मुद्रणम् अशुद्धिबहुलम् अस्पष्टं चाभवत्।

## आस्माकीनम्

•

### अस्माभिरुपेक्ष्यते कालिदासः

भारतीयवाङ्मयस्य या ऐतिहासिकी आन्वेषिकी उपलब्धिर्या इदानीं विद्यते प्रायेण पाश्चात्यविदुषामेव कर्तृत्वं तत्र विद्यते। वयन्तु बहुधा तेषां मतानामनुगन्तारो भूत्वा पौरस्त्योपलब्धिं निरस्कुर्वन्तः पण्डितम्मन्यमानाः तिष्ठामः। भवतु एतत्। किन्तु लज्जास्पदमेतद् यत् नास्माभिः स्वकीयप्राक्तनवाङ्मयानुशीलने पाश्चात्यविद्वत्प्रदत्तदिशा अपि सम्यक्प्रयासोऽकारि। एतत्प्रसङ्गे कालिदासम् उदाहरामः। कालिदासः एतद्राष्ट्रस्य प्रातिस्विकं प्रतिनिधित्वं स्वरचनासु करोति। पाश्चात्यैः शेक्सपीयरनाट्यकारेण कालिदासस्य तुलना प्रदीयते। शेक्सपीयरनाट्यकारम् अधिकृत्य अनेके आलोचना - टीका—व्याख्याग्रन्थाः आंग्ल भाषायां विद्यन्ते,तान् दृष्ट्वा विद्वान्सः शेक्सपीयरकविं कालिदासाद् बहु मन्यन्ते। सत्यं तु एतद्विपरीतम् कालिदासस्य तुलनाम् शेक्सपीयरकविरधिरोहति न वेति संशयास्पदम्। किन्तु कालिदासस्य किं जीवनदर्शनम् भारतीयकाव्यवाङ्मये कथं तस्य अजरत्वम्, कानि वैशिष्ट्यानि तस्य साहित्यस्य—इत्यादिविषयमधिकृत्य भारतीयानाम् एतादृशो मौलिका ग्रन्था एव न वर्तन्ते यान् दृष्ट्वा कोऽपि वैदेशिको विद्वान् कालिदासं ज्ञातुम् अनुभवितुं वा अर्हति। ये ग्रन्थाः सन्ति कतिपया एव ते।

वयं तु एतदर्थं भारतीयविदुषो विनिवेदयामो यत् कालिदासीयसाहित्यानुशीलने 'कालिदाससाहित्यकोशस्य अभावः अस्मान् आकुलीकरोति। यदि कालिदाससाहित्यस्य प्रामाणिकं कोशं निर्मातुं विद्वांसः प्रयतेरन्, तथा अस्मिन् कार्ये भारतशासनं प्रादेशिकशासनानि च सहयोगं दद्युश्चेत्, महद्राष्ट्रीयकार्यस्य पूर्णता भविष्यति, राष्ट्रस्य शाश्वतयुवानं कविं कालिदासम् अध्येतुं सौकर्यं च स्यात्। कालिदासजयन्तीसमारोहकरणाद् गरीयस्त्वेतदनुष्ठानम्, अनेन कालिदासयशोवितानं विस्तारं लप्स्यते इति मन्महे।

# Sangamani

**Sanskrit Quarterly Magazine**



Edited by

**Prabhat Shastri, Sahityacharya**



Annual Subscription
Rs. Twelve only
Rs. 3/50 per copy
[ IN FOREIGN ]



Published by Prabhat Shastri for Sanskrit Sahitya Parishad, Daraganj, Allahabad-6 ( India ) and Printed by him at—

Onkar Press, Allahabad (India)

उत्तरप्रदेशीय-शिक्षा-विभागीय-
बी-१४५६१-१४८३०।१८-८२ (१२)-६६-६७
लखनऊ-२६ नवम्बर '६६ [गजट भाग-४) द्वारा
एषा पत्रिका विद्यालय-महाविद्यालय-दीक्षाविद्यालयीय-
पुस्तकालयेषु क्रयार्थं स्वीकृता ॰

## अनुक्रमः







# संगमनी

# Sangamani

Sanskrit Quarterly

संस्कृत-त्रैमासिकी

द्वितीयवर्षे चतुर्थोऽङ्कः

२०२३ वैक्रमाब्दः

•

सम्पादकः

**प्रभात शास्त्री**

सहसम्पादकौ

**तारिणीश झाः** **डा० जयशङ्कर त्रिपाठी**

•

प्रयागस्थ-संस्कृत-साहित्य-परिषदः प्रकाशनम्

कार्यालयः
**संगमनी**
दारागंज—प्रयागः

वार्षिकं मूल्यम्
रु० ५·००
प्रत्यङ्कम् रु० १·५०

परामर्श-समज्या

डा० हरवंशलाल शर्मा (अलीगढ़म्)

श्रीबालकृष्णरावः (प्रयागः)

●

लक्ष्यं योजना च

- इयं संगमनी संस्कृतस्य निःस्वार्थसेवाया नामान्तरम् ।
- अस्यां संस्कृतवाङ्मयविषये गवेषणापूर्ण-लेखानां परिचर्चायाश्च प्रकाशनम्,
- संस्कृतभाषाया अप्रकाशितग्रन्थस्य च प्रकाशनं भवति ।
- अनया संस्कृतवाङ्मयस्य संस्कृतभाषायांश्च प्रचाराय प्रसाराय च प्रयत्नो विधीयते ।

●

# संगमनी

अहं राष्ट्री संगमनी वसूनाम्

—ऋग्वेदे १०।१२५।३

२ वर्षे • संवत् २०२३ • ४ अङ्कः

## शिव-चरितम्

•

भद्रं चन्द्रकले शिवं सुरनदि श्रेयः कपालावले
कल्याणं भुजगेन्द्रवल्लि कुशलं विश्वे शटासन्तते !
इत्याहुर्मिलिताः परस्परममूर्यस्मिन् प्रशान्तिं गते
कल्पान्तारभटीनटस्य भवतात्तद्वः श्रिये ताण्डवम् ॥

जटागुल्मोत्सङ्गं प्रविशति शशी भस्मगहनं
फणीन्द्रोऽपि स्कन्धादवतरति लीलाञ्चितफणः ।
वृषः शाठ्यं कृत्वा विलिखति खुराग्रेण नयनं
यदा शम्भुश्चुम्बत्यचलदुहितुर्वक्त्रकमलम् ॥

—राजशेखरस्य

•

# सूक्तिकवीनां दृष्टिविलासः



पाणौ पद्मधिया मधूकमुकुलभ्रान्त्या तथा गण्डयो-
र्नीलेन्दीवरशङ्कया नयनयोर्बन्धूकबुद्ध्याधरे ।
लीयन्ते कबरीषु बान्धवजनव्यामोहजातस्पृहा
दुर्वारा मधुपाः कियन्ति सुतनु स्थानानि रक्षिष्यसि ।।

—विक्रमादित्यस्य

दृष्टा काञ्चनयष्टिरद्य नगरोपान्ते भ्रमन्ती मया
तस्यामद्भुतपद्ममेकमनिशं प्रोत्फुल्लमालोकितम् ।
तत्लोभौ मधुपौ तथोपरि तयोरेकोऽष्टमीचन्द्रमा-
स्तस्याग्रे परिपुञ्जितेन तमसा नक्तन्दिव स्थीयते ।।

—वित्तोकस्य

आदौ विस्मयनिस्तरङ्गमनु च प्रेङ्खोलितं साध्वसै-
र्व्रीडानम्रमथाक्षणं प्रविकसत्तारं दिदृक्षारसैः ।
आकृष्टं सहजाभिजात्यकलनात्प्रेम्णा पुरः प्रेरितं
चक्षुर्भूरि कथंकथञ्चिदगमत्प्रेयांसमेणीदृशः ।।

—चित्त्रूकस्य

आयाते दयिते मरुस्थलभुवामुल्लङ्घ्यदुर्लङ्घ्यतां
गेहिन्या परितोषवाष्पतरलामासज्य दृष्टिं मुखे ।
दत्त्वा पीलुशमी-करीरकवलान् स्वेनाञ्चलेनादरा-
दामृष्टं करभस्य केशरसटा भारावलग्नं रजः ।।

—केशटस्य

आचार्य-पण्डित-सरस्वतीप्रसाद चतुर्वेदी

# रसगङ्गाधरस्य पूर्णताविषयिणी वार्त्ता

साहित्यशास्त्रे सुप्रसिद्धो रसगङ्गाधरनामा ग्रन्थ अपूर्ण एवोपलभ्यते इति विदितमेव सर्वेषां विदुषाम् अद्यावधि प्रकाशितेषु ग्रन्थेषु द्वितीयानने उत्तरालङ्कारनिरूपणावसरे उदाहृताया आर्याया पादत्रयानन्तरमेव ग्रन्थोऽयम् अकस्मादेव त्रुटितो लभ्यते—

किं कुर्वते दरिद्राः, का सारवती धरा मनोज्ञतरा
को पावनस्त्रिलोक्याम्.........................

अयं त्रुटितोंऽशः सर्वत्रदेशे तथैवोपलभ्यते इति महादाश्चर्यम् । यतः पादत्रयानन्तरमेव ग्रन्थत्रुटि : न स्वाभाविकी दृश्यते, तर्हि किं ग्रन्थकारेण कौतूहलोत्पादनाय न्थः त्रुटित एव त्यक्तः स्यात् ।

मद्रासनगर्यां गवर्नमेंटओरियण्टलम्युनिस्क्रिप्ट-ग्रन्थालये रसगङ्गाधरः सम्पूर्णत्वेन उपलभ्यते—इति वार्त्ता श्रुतिपथमायाता । कौतूहलजनकोऽयं विषयो हृदि स्थित आसीत् । कालान्तरे मद्रासनगर्यां गतवता मया तद्विषयिण्या जिज्ञासाया: शान्तये सम्बद्धग्रन्थालये ग्रन्थालयाध्यक्षैः सह सम्पर्कः स्थापित : । तत्फलस्वरूपं निम्नाङ्किताः सूचना उपलब्धा जिज्ञासूनां कृते निवेद्यन्ते---

मद्रासनगरे गवर्नमेंट-ओरियण्टल-म्युनिस्क्रिप्टग्रन्थालयो मद्रास विश्वविद्यालयस्य सविध एव स्थितोऽस्ति । तत्र अष्टादशाधिकएकोनविंशतिशततमे ईस्वी-वर्षे हस्तलिखितग्रन्थानां वर्णनात्मिका सूची प्रथि-

तयशोभिः कुप्पूस्वामिशास्त्रिमहाभागैः प्रकाशिता, तदनुसारं ग्रन्थालये रसगङ्गाधरस्य पञ्च हस्तलिखितप्रतयः सन्ति। तेषु द्वे प्रत्यौ (१२६२२, १२६२३ क्रमाङ्किते) तेलुगुलिप्याम्, अवशिष्टास्तिस्रः प्रतयः ताडपत्राङ्किता ग्रन्थलिप्यां (तामिललिप्यां) वर्तन्ते। अन्तिमाः तिस्रः प्रथमाननावधिर्वा संशयालङ्कारावधिर्लभ्यन्ते। अपूर्णत्वेन च तासां स्पष्टो निर्देशः। किन्तु प्रथमोक्तप्रतिद्वयविषये भ्रमवशात् सम्पूर्णग्रन्थात्मिका प्रतिः, इति मुद्रितसूच्यां निर्दिष्टं वर्तते। प्रथमप्रतौ च उक्तार्याश्लोकस्य चतुर्थपादोऽपि एवंविधो दृश्यते—

गुरुपदभाग्यासुदेतोयम्।

अयं चरणः कोष्ठकान्तरगतः ( ) वर्तते, अनेन अस्य क्षेपकत्वमनुमीयते। किन्तु उपलब्धप्रतीनां साक्षादवलोकनेन प्रथमा प्रतिः मुद्रितपुस्तकमिव तथैव अपूर्णा वर्तते। द्वितीयप्रतौ तु तृतीयपादस्थाने तृतीयचतुर्थपादौ इत्थम्—

को वा धवस्त्रिलोक्यां  
गुरुपदभाग्यासुदेतोयम्।

एतद्विषयस्य सम्पूर्णपर्यालोचनेन इत्थं प्रतीयते यद् ग्रन्थसूच्यां प्रथमद्वितीयप्रत्योः विषये भ्रमो दृश्यते, अर्थात् सम्पूर्णग्रन्थत्वेन निर्दिष्टा प्रतिः मुद्रितगन्थ इव अपूर्णा एव वर्तते। द्वितीयप्रतौ चतुर्थपादानन्तरं पुष्पिकेत्थं दृश्यते—

इति रसगङ्गाधरे उत्तरप्रकरणं समाप्तम्।

एतत्पुष्पिकादर्शनेनैव ग्रन्थसमाप्तिभ्रमः सञ्जातः स्यात्। तथैव च सूचना ग्रन्थसूच्यां प्रकाशिता। एवं साकल्येन पर्यालोचने कृते रसगङ्गाधरनामा ग्रन्थः अपूर्ण एव आस्ते, केवलं चतुर्थपादस्य कोष्ठान्तर्गतसन्निवेशादेव नवीनोपक्रमोऽस्तीति।

इदानीमयं प्रश्नः समुदेति, कोऽर्थः खलु नवसन्निविष्टचतुर्थपादस्य, तस्य च प्रकृतेः किं स्वारस्यम् इति अद्यापि अनाकलितं वर्तते । ग्रन्थालये तत्रत्यैर्विद्वज्जनैः सह कृतायां चर्चायामित्थं सूचितमासीत् यत् कुप्पूस्वामि-शास्त्रिणां संरक्षणे प्रकाशितायां ग्रन्थसूच्यां तत्र क्रमाङ्कितप्रत्या विषये केनचित् पण्डितेन प्रकरणानुरूपतया चतुर्थपादः सन्निवेशितः परन्तु तस्य स्पष्टव्याख्या नेदानीं केनापि तत्र कृता, कर्तुं शक्तश्च । विदुषां पुरस्तादिमं विषयं समुपस्थाप्य जिज्ञास्यते यत् चतुर्थपादसन्निवेशस्य किं तात्पर्यं कीदृशं च तस्य प्रकरणानुरूपत्वम्, आशास्यते काव्यशास्त्रमर्मज्ञा एतद्रहस्योद्घाटने रुचिं प्रदास्यन्ति ।

●

## श्लेषेण भूपकूपयोः वर्णनम्

अतुलभुवनरक्षा-कार्यदक्षः कुलीनः,
प्रकृतिजनहिते यो जीवनस्याऽपि दाता ।
गुणगणलसिताङ्गो हर्षकः कर्षकाणां
विलसति भुवनेऽस्मिन् भूपतिः कूपकल्पः ॥

प्रभातमिश्रः

●

श्रीश्रीकृष्णमणित्रिपाठी

## भक्तिसाधनसम्प्रदायाः

भक्तिसमुन्नतिसाधनविषये भक्तिसम्प्रदायाचार्याणां विभिन्नानि मतानि सन्ति। तानि यथा—

(१) अस्मिन् वैरञ्चे प्रपञ्चे दैवी आसुरी चेति द्विधा सम्पत्तिदृष्टिगोचरतामायाति। एतत्सम्पत्तिद्वयप्रतिद्वन्द्वितैव शास्त्रेषु देवासुसंग्रामनाम्ना समाम्नाता। तत्र पुण्यमयी दैवीसम्पत् जीवमुन्नमयति, पापमयी चासुरीसम्पद् अधोगमयति। आसुरीसम्पद्विनाशपूर्वकं दैवीसम्पद्विकासेन साधके भक्तेरुदयो बोभवीति क्रमशः सम्मुन्नतिश्च जायेत इति अङ्गिरसो महर्षेः मतमस्ति। अतएव श्रीमद्भागवगीतायां दैवासुरसम्पद्विवेचनपुरस्सरं स्पष्टं निर्दिष्टवान् भगवान् श्रीकृष्णः अर्जुनं प्रति —

दैवीसम्पद्विमोक्षाय निबन्धायासुरी मता।
मा शुचः सम्पदं दैवीमभिजातोऽसि पाण्डव ॥

(२) भगवत्पूजादौ अनुराग एव साधकस्य चेतसो गतिं कल्याणकरीं कुर्वन् तमाध्यात्मिकमार्गेऽग्रेसारयति। अतो भगवतः पूजायामनुराग एव साधकस्य समुन्नतिकरः इति अष्टादशपुराणनिर्मातुर्भगवतो वेदव्यासस्यास्ति मतम्। बहिःपूजा अन्तःपूजा चेति भेदेन पूजा द्विविधा। तत्र स्थूलमूर्तौ पुष्पधूपदीपनैवेद्यादिना बाह्यार्चनीयद्रव्येण बहिः पूजा सम्पद्यते। हृदयकमले भगवतो मनोभवां मूर्तिं संस्थाप्यन्तःकरणेनैव समनुष्ठितान्तःपूजा च प्रोच्यते। द्विविधापीयं पूजापद्धतिः साधनमार्गे साधकं समु-

न्नयति । तथा च बहिःपूजायामन्तःपूजायाञ्च अनुरागोदयेन भगवद्भक्तिः समुज्जृम्भत इति निश्चप्रचम् ।

(३) भगवत्कथादिषु अनुराग एव साधकं भक्तिमार्गेऽग्रे सारयति । अतो भगवत्कथानुरागः साधकसमुन्नतिकर इति गर्गाचार्यस्य मतम् । तथाचोक्तं श्रीमद्भागवते—

संसारसिन्धुमतिदुस्तरमुत्तितीर्षो—
नान्यः प्लवो भगवतः पुरुषोत्तमस्य ।
लीलाकथारस निषेवणमन्तरेण
पुंसो भवेद् विविधदुःखदवार्दितस्य ।।
तदेव रम्यं रुचिरं नवं नवं
तदेव शश्वन्मनसो महोत्सवम् ।
तदेव शोकार्णवशोषणं नृणां
यदुत्तमश्लोकगुणोऽनुगीयते ।।

तस्मादेतादृशी भगवत्कथारतिरवश्यमेव साधकं समुन्नमयतीति नास्ति सन्देहलेशः ।

(४) बाधामन्तरेण परमात्मनिरतिरेव साधकमध्यात्मराज्येऽग्रे गमयति । अतो भगवतो बाधाभावमूलिकाया धारणायाः समुन्नतिरेव भक्तेरुदयस्य कारणमिति महर्षेः शाण्डिल्यस्यास्ति सम्मतिः । यदा साधकस्य भक्तिभावपूर्णं चेतो जाह्नव्या अविरलप्रवाह इव सच्चिदानन्दसमुद्रे प्रधावेत् सांसारिकी कापि बाधा तदीयचित्तप्रवाहगतिरोधं नैव विदध्यात् तदा साधके आत्मगतिः समुन्नतिमापन्नेति ज्ञेयम् । आसक्त्या बन्धनं भावेन च मोक्ष इति विज्ञानमनुसृत्य विषयासक्तिं त्यजतः साधकस्य चेतो अध्यात्मभावसंयुक्तं सत् आत्मरतियुक्ततामुपैति । यदा

साधको बहिर्मुखमात्मनश्चित्तं भगवद्भावितं कृत्वा मनोवाक्कायकर्मभिः सर्वमपि कार्यं भगवद्भावभावितं कुर्यात् तदा तत्र दृढाया भक्तेः हृदयो जायते। चित्तं सत्त्वगुणाभिमुखं प्रवाहयन् मानवः पुण्यात्मा, तमोगुणाभिमुखं प्रवाहयन् विषयपरायणश्च मानवः पापात्मा प्रोच्यते। अतएव भक्तशिरोमणिना प्रह्लादेन संप्रार्थितो भगवान् नृसिंहः —

या प्रीतिरविवेकानां विषयेष्वनपायिनी।
त्वामनुसरतः सा मे हृदयान्मापसर्पतु॥

(५) भगवतो महत्त्ववर्णनं कुर्वाणः साधकः समुन्नतिमार्गाभिमुखमग्रे सरतीति महर्षेर्भरद्वाजस्यास्ति मतम्। भगवतो महिमाख्याने भगवत्प्रेममुग्धः साधको भगवदीयगुणगणान् कीर्तयन् समस्तमपि भुवनं पवित्रयति। साधकस्य चित्ते भगवतो महत्त्वे सुप्रतिष्ठिते तस्य हृदयसरोजं भगवत्प्रेममयमाधुर्येण विजृम्भितं सत् अहर्निशं भगवदीयं महिमानमाख्यातुमेव प्रवर्तते। अतो भगवन्महिमाख्यानपरायणः साधकोऽचिरादेव समुन्नतिमार्गमधिरोहतीत्यत्र नास्ति कश्चन सन्देहः। तथा चोक्तं श्रीमद्भागवते—

निवृत्ततर्षैरुपगीयमानाद् भवौषधाच्छ्रोत्रमनोऽभिरामात्।
क उत्तमश्लोकगुणानुवादात्पुमान् विरज्येत विना पशुघ्नात्॥

श्रीमद्भगवद्गीतायाञ्च भगवान् श्रीकृष्णः —

मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम्।
कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च॥

(६) जगत्सेवाप्रवृत्तिरेव साधनराज्ये समुन्नतिकर्त्रीति महर्षेः वसिष्ठस्यास्ति सम्मतिः। विश्वं ब्रह्मस्वरूपमवधार्य जगत्सेवा ब्रह्मसेवेति

मन्यमानं साधकं जगत्सेवाप्रवृत्तिरवश्यमेव साधनमार्गेऽग्रे सारयति । सर्व-त्रैव संसारे भगवत्स्वरूपं निरीक्षमाणो भक्तो यथासम्भवं द्रव्येण विद्यया ज्ञानादिना च भगवत्स्वरूपस्य जगतः सेवायां प्रवर्तमानो भगवद्भक्तिं लभते । साधकस्य परमोदारसेवाकार्येण भगद्भक्तेरवाप्तिः स्वाभाविकी । यस्मिन् भक्ते जगत्सेवाप्रवृत्तिर्दृश्यते स किल नूनमेव भक्तेरधिकारी । परमात्मस्वरूपज्ञानपूर्वकं जागतिकहितसाधनपरायणो भक्तो विशिष्टं महत्त्वं बिभर्ति—

अथ मां सर्वभूतेषु भूतात्मानं कृतालयम् ।
अर्हयेद्दानमानाभ्यां मैत्र्याभिन्नेन चक्षुषा ॥
मनसैतानि भूतानि प्रणमेद् बहु मानयन् ।
ईश्वरो जीवकलया प्रविष्टो भगवानिति ॥

(७) परमात्मनि समर्पिताखिलाचरणो भक्तः समुन्नतिमार्गेऽग्रे सर-तीति महर्षेः कश्यपस्यास्ति मतम् । यो हि साधको निखिलानि अपि कर्माणि भगवते समर्प्य फलनिर्लिप्तः भवति स शीघ्रं कर्मासक्तिमहङ्कारं च परित्यज्य प्रकृतिबन्धनविनिर्मुक्तो जायते । भगवच्चरणारविन्दे स्वी-यानि सर्वाणि अपि कर्माणि समर्पयतो भक्तस्य चेतसः कर्तृत्वाभिमानः समूलनाशं नश्यति । एवमहङ्कारे विनष्टे स शीघ्रमेव परमात्मनि आत्मानं विलीय स्वस्वरूपोपलब्धिं कुरुते । अतः कश्यपमतेन भगवदर्पिताखिला-चरणं समुन्नतिलक्षणमित्यत्र नास्ति सन्देहलेशोऽपि—

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय ! तत्कुरुष्व मदर्पणम् ॥
ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः ।
अनन्येनैव योगेन मां ध्यायन्त उपासते ॥
तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।
भवामि न चिरात्पार्थ ! मय्यावेशितचेतसाम् ॥

(८) भगवतो विस्मरणेन व्याकुलताप्राप्तिरेव साधकस्य समुन्नतेः लक्षणम् । यदा भगवतो विरहेण भक्तस्य मनो नितरां व्याकुलत्वमनुभवति तदा स साधनमार्गेऽग्रेसरतीति देवर्षेर्नारदस्यास्ति मतम् । यदा साधकस्य चित्तं भगवतोऽसान्निध्यात् घोरामशान्तिमनुभवति तदेव देवर्षिनारदमतेन साधके भक्ते हृदयस्य प्राकट्यमासाद्यते । यदा च भक्तस्य चेतो भगवदभिमुखं भवति तदा स वैकल्याभावात्परमां शान्तिमवाप्नोति । यथा पतिपरायणायाः पतिव्रतायाः पत्युरसान्निध्ये प्रेम तीव्रत्वं जायते तथैव भगवतो विरहे भगवत्प्रेमासक्तस्य भक्तस्य हृदयं व्याकुलं भवति । प्रेमपात्रे चक्षुर्विषयातिक्रान्ते न्यूनमपि प्रेम महदाधिक्यं प्राप्नुयादित्यवधार्य रासलीलावसरप्रसंगे भगवान् श्रीकृष्णो मध्ये मध्येऽन्तर्दधौ । पूर्णप्रेममार्गे सर्वविधानामन्तरायाणां विरहाग्निना दहनमत्यावश्यकम् । अतो गोपीभिः भगवतः श्रीकृष्णस्य विरहे पूर्णा यन्त्रणाऽनुभूता भगवदन्तर्धाने व्याकुला गोप्यः समस्तेऽपि वने महता परिश्रमेण भगवतः श्रीकृष्णस्यान्वेषणमकार्षुः:—

अन्तर्हिते भगवति सहसैव व्रजाङ्गनाः ।
अतप्यंस्तमचक्षाणाः करिण्य इव यूथपम् ॥
हा नाथ रमणश्रेष्ठ ! क्वासि क्वासि महाभुज !
दास्यास्ते कृपणाया मे सखे दर्शय सन्निधिम् ॥

गायन्त्य उच्चैरमुमेव संहता विचिक्युरुन्मत्तकवद्वनाद्वनम् ।
पप्रच्छुराकाशवदन्तरं बहिर्भूतेषु सन्तं पुरुषं वनस्पतीन् ॥

अतो महर्षिनारदोक्ता भगवद्विरहव्याकुलताप्राप्तिः साधनसमुन्नतेः उत्तमं लक्षणमित्यत्र न मनागप्यस्ति सन्देहलेशः । इत्येवं संक्षेपतोऽष्टानां महर्षीणां मतानि उपन्यस्तानीत्यलं पल्लवितेन ।

श्रीभगवानदाससफड़िया:

एकाङ्कम् ●

# एकविंशतिशताब्दी : द्वाविंशतिशताब्दी

[गताङ्कादग्रे]

डा० बाटः—जलम् ?

डा० शीलः—(उत्थाय पुस्तकस्यैकस्य पृष्ठं विपरिवर्तयन्) डा० चिन महोदय उद्जनस्य भागद्वयम् ओषजेन मिश्रितं (एच० टू० ओ०) जलम् भवति। (डा० चिन उत्थाय द्वे वायुनलिके [गैस सेलेन्डर] योजयति पतत् जलमेकस्मिन् पात्रे गृह्णाति।)

डा० चिनः—(ज्ञानव्रताय पानपात्रं प्रयच्छन्) इदं जलं गृह्णातु भवान्।

ज्ञानव्रतः —(क्षणिकान्तरालानन्तरम्) इयं गुटिका स्फूर्ति तु ददाति, किन्तु उदरस्य ज्वालां नैव शमयति। अयि वत्सकाः! मह्यं किमपि भोजनं प्रयच्छत।

डा० बाटः—वत्सका इति, अपि वयं बालाः? मम आयुः सप्तदश-वर्षाणां वर्तते। डा० द्वाविंशतिवर्षीयः अस्ति, डा० शीलस्तु वृद्धतरः अस्ति, विगतमासे समस्तब्रह्माण्डे तस्य सप्तविंशतितमा वर्षग्रन्थिः सम्मानिता।

ज्ञानव्रतः—तर्हि भवदीययुगे मानवजीवनस्य प्रतिशतमिदमेवास्ते ?

डा० चिनः—अस्माकमधिकतममायुस्त्रिंशद्वर्षाणामस्ति। यथा-यथा

विज्ञानं समुन्नतं भवति तथा-तथा क्षीयतेऽस्माकमायुरियमेका समस्या अस्ति।

**ज्ञानव्रतः**—अस्याः समाधानम् ?

**डा० बाटः**—(व्यंग्येन) संभवतः भवान् करोतु।

**ज्ञानव्रतः**—इदानीं तु मम भोजनस्य प्रबन्धं कुरु डाक्टर महोदय! अपि नेयमपि समस्या वर्तते भवदीयविज्ञानस्य कृते ?

**डा० शीलः**—सोडियम् क्लोराइड। (डा० चिनः काचकूपिकातो लवणं निस्सार्य ददाति। ज्ञानव्रतः गोधूमान् चर्वयति लवणेन सह भक्षयति। क्षणान्तरालादनु)

**ज्ञानव्रतः**—इदानीं शान्तिः प्राप्ता। (डा० चिनं प्रति) कृपया एक-पानपात्रमितं जलं ददातु भवान्।

(डा० चिनः समुत्थाय जलं पूर्वप्रकारेण निर्माय आनीय ज्ञानव्रताय ददाति)

**ज्ञानव्रतः**—इदानीं तु शिशयिषा जागर्ति। कुत्राहं निवसिष्यामि ? अंधकारोऽपि जायते।

**डा० शीलः**—अन्धकारस्य चिन्तां भवन्तो मा कुर्वन्तु। किंचित् क्षणा-नन्तरमेव कृत्रिमसूर्यः प्रकाशितो भूत्वा अन्धकारं प्रकाशे परिवर्त-यिष्यति। गृहादिकं तु समस्तं राष्ट्रीयधनं वर्तते। किमपि गृहं रिक्थं-वीक्ष्य तत्र निशां यापयितुं शक्यते। किन्तु भवता तु मासत्रयं यावदत्रैव प्रयोगशालायां निवासः करणीयो येन शल्यक्रियाद्वारा भवतो युगानुरू-पता सम्पाद्येत। तदा भवान् विश्वदर्शनाय भ्रमणं करिष्यति।

**ज्ञानव्रतः**—अपि एकाकी एव।

**डा० शीलः**—नैव। निश्चितं वर्तते यद् भवता सह कुमारी चित्रा पथ-प्रदर्शकत्वेन निजसचिवत्वेन च सहैव गमिष्यति। अपि भवान् स्वस्थः ?

**ज्ञानव्रतः**—किमर्थम्।

**डा० शीलः**—अस्माकं विश्वाध्यक्षमहोदयः श्रीसोमणः साम्प्रतं

शुक्रगृहे वर्तते। भवतः साक्षात्करणं चित्रध्वनियन्त्रेण [टेलीविजनः] करिष्यति।

**ज्ञानव्रतः**—प्रस्तुतोऽस्मि।

**डा० शीलः**—(उत्थाय चित्रध्वनियन्त्रस्य वर्तनम् [नाव्सम्] भ्रामयति एकस्य व्यक्तेराकृतिः स्पष्टा भवति) अहं डा० शीलः पृथ्वीतो ब्रवीमि श्री ज्ञानव्रत इदानीं स्वस्थोऽस्ति।

**चित्रध्वनियन्त्रतः**—अहं श्रीसोमणः शुक्रात् निवेदयामि श्रीज्ञानव्रतः प्रस्तुतो भवेत्। (आकृतिः लुप्यते श्री ज्ञानव्रतः समीपं गच्छति श्रीसोमणस्य आकृतिः स्पष्टा भवति।)

**डा० शीलः**—इयं समस्या तु संसाधितास्माभिः प्रयोगावस्थायां कतिपयव्यक्तीनाम् आमाशयः, लघु अन्त्रम् बृहदन्त्रं च शल्यक्रियाद्वारा पृथक्कृतम्। इदानीं तु एतादृशो वंशानुक्रम एव प्रवृत्तः। येभ्योऽनुदिनं शक्तिप्रदखाद्यस्य पंचगुटिका अपेक्ष्यन्ते। एतासां वितरणं ब्रह्माण्डे निःशुल्कमुदारतापूर्वकं विधीयते।

**ज्ञानव्रतः**—किन्तु मदीयशरीरे आमाशयः।

**डा० शील**—इदं तु ज्ञापयतु यद् भवान् किमत्स्यति? येनाद्य प्रबन्धः सम्पाद्येत् श्वस्तु शल्यक्रिया भविष्यत्येव।

**ज्ञानव्रतः**—गोधूमाः शालयो वा किमपि।

**डा० शीलः**—अहं चेष्टे। (दूरभाषं [टेलीफोनं] प्रयुङ्क्ते) शृणु... वानस्पतिकउद्यानम्। अहं डा० शीलः ब्रवीमि। अधीक्षकाय देहि? शृणु अधीक्षक, पश्य, ज्ञानव्रतस्य भोजनाय गोधूमा अपेक्ष्यन्ते, गोधूमा... आम्। ट्रिटकम् इति मिलिष्यन्ति? धन्यवादः। आम्, भवान् प्रेषयतु। प्रायः एकसेटकमितेन कार्यं सेत्स्यति। भवान् प्रेषयतु...पंचदश कलाभिरेव...बाढम्। धन्यवादः। (एकः सूचिकः [दर्जी] प्रविशति)

**डा० चिनः**—भवान् क्षणं समुपतिष्ठितु। भवतः वस्त्राणां मापो ग्रहीष्यते।

**ज्ञानव्रतः**—अपि नेमानि वस्त्रेणि पर्याप्तानि सन्ति ?

**डा० बाटः**—युगः पर्याप्तमग्रेसरत्वमापन्नो महाशय ?

**डा० शीलः**—अस्माभिः काचस्य तथा अग्निशामकस्य [फाइबर] संयोगेन एतादृशानि वस्त्राणि निर्मितानि यानि कदापि नैव जीर्यन्ते न च मलिनानि भवन्ति एषाम् एकं साधोवस्त्रकम् [सूट] सम्पूर्णजीवनाय पर्याप्तं भवति। यत् प्रत्येक-व्यक्तये दशमवर्षपूर्तौ शासनं ददाति।

**ज्ञानव्रतः**—अतीव सुन्दरम् (उपतिष्ठिति। सूचिकः मापनं विदधाति गच्छति च। ज्ञानव्रतः उपविशति। वानस्पतिकोद्यानस्य मनुष्यः गोधूमानानयति।)

**डा० चिनः**—एतेन भोजननिर्माणं कथं कर्तुं शक्यते ?

**ज्ञानव्रतः**—इयान् समयः क्वास्ते ? इतः समानयन्तु। अहमेतान् लवणेन साकं अपक्वानेव अत्स्यामि। डाक्टर महाशय ! बुभुक्षातीव बलवती भवति। एतया महामहतामपि शासकानां लोकप्रियता अवसानं नीता।

**डा०बाटः**—न्यूनान्न्यूनं भवतां युगे। (गोधूमान् ज्ञानव्रतस्य पुरो निदधाति) किन्तु लवणम् ?

**श्रीसोमणः**—ज्ञानव्रतमहोदय ! अपि भवान् स्वस्थः ?

**ज्ञानव्रतः**—श्रीमन् ! धन्यवादः। अत्यन्तं कृतज्ञतामावहामि यद् भवतोदर्शनस्य सौभाग्यलाभः संवृत्तः।

**श्रीसोमणः**—शुक्रनक्षत्रे भवतः सम्माननं विधाय वयन्नितरां प्रसन्नाः भविष्यामः।

**ज्ञानव्रतः**—अनुगृहीतोऽस्मि। यदा एव अहम् एतद्योग्यो भविष्यामि समागमिष्यामि।

**श्रीसोमणः**—बाढम् ? जय विश्व !

**ज्ञानव्रतः**—जय विश्व !

(पटाक्षेपः)

## तृतीयं दृश्यम्

[अनुसन्धानशालायाः प्रकोष्ठः। आसन्दिकाः, तत्र काष्ठफलके नलमुखानि, रबरनालिकां संयोज्य तद्वारा (हुक्का) धूमपानकारिणो जना धूमपानं कर्तुं शक्नुवन्ति। कतिचित् क्षणान्तराले यान्त्रिक-मानवाः [रोबेट] आणविकपेयानि-पानपात्रेषु आनीय २ नम्रतापूर्वकं फलकेषु निधाय गच्छन्ति। आसन्दी-स्थिता जनाः धूमपानेन सह निर्दिष्ट-द्रवस्य चूषणं कुर्वन्ति। युगानुरूपपरिधाने कुमारी चित्रा तथा ज्ञानव्रतः आगच्छतः सकौतूहलं निखिलं पश्यन्तौ रिक्तं फलकमन्विष्यतः। अस्मिन्नेव समये डा० शीलः यः फलकमेकमाश्रित्य एकाकी उपविष्टः अस्ति समुत्थाय ज्ञानव्रतमाकर्षयति।

विशेषः—यदा ज्ञानव्रतप्रभृतयो वार्त्तां कुर्वन्ति तदा पृष्ठसंगीतध्वनि-र्नितान्तं मन्दो भवति।]

डा० शीलः—समागच्छतु ज्ञानव्रतमहोदय! अत्रागच्छतु।

(ज्ञानव्रतश्चित्रा च डा० शीलस्य सविधं गत्वा आसन्दीषु उपविशतः।)

चित्रा—भवान् डा० शीलेन सह धूमपानं करोतु अहमिदानीमेवा-गच्छामि। (चित्रा गच्छति डा० शीलः स्वकीयवस्त्रपुटकादेकां रबर-नलिकां निःसार्य ज्ञानव्रताय प्रयच्छति।)

ज्ञानव्रतः—किमर्थमिदम्।

डा० शीलः—इमां (निर्देशयन्) अनेन नलमुखेन संयोज्य धूमपानस्य आनन्दं गृह्णातु भवान्। अस्माकं युगे धूपानव्यवस्था अपि सामूहिक-रूपेण सम्पाद्यते।

ज्ञानव्रतः—(स्वकीयनलिकां नलमुखेन संयोज्य धूमपानं कुर्वन्) अस्माकं युगे विद्यालयशिक्षकाः विद्यार्थिभ्यो धूमपानत्यागस्योपदेशं प्रददाति स्म। भवन्तस्तु नितरां दूरस्थिता अपि धूमपानं कर्तुं शक्नुवन्ति। (ज्ञानव्रतेन सह डा० शीलमहोदयोऽपि स्मयते। कुमारी चित्रा समागत्य

उपविशति । तदा यन्त्रमानवः पात्रद्वये प्राणविकपेयमादाय काष्ठफलकोपरि निदधाति । डा० शीलः एकेन पात्रेण चूषणमारभते ।)

ज्ञानव्रतः—(यन्त्रमानवं निर्दिशन्) भवतां तु सज्जैव विचित्रास्ति । (पात्रं दर्शयन्) अत्र किं मद्यं वर्तते ।

चित्रा—यान्त्रिकमानवोऽयं विद्यते । श्रमकार्यकृतेऽस्यैवोपयोगो भवति । पात्रे प्राणविकं पेयमस्ति । एतस्य पानेन रक्तशिरासु स्वल्पा उत्तेजना आगच्छति । मद्यं तु विधानविरुद्धं वर्तते ।

ज्ञानव्रतः—(स्वीयं पानपात्रं गृह्णन्) तर्हि भवती अपि गृह्णातु कुमारि चित्रे ।

चित्रा—अहम् कार्ये नियुक्तास्मि महोदय ? भवान् पिबतु ।

डा० शीलः—(रिक्तं पात्रं फलके स्थापयन्) ज्ञानव्रतमहोदय मया सभायां गन्तव्यं, भवन्तोऽवकाशं गृह्णन्तु ।

ज्ञानव्रतः—सुष्ठु । भवान् गच्छतु । कुमारी चित्रा तु अत्र अस्त्येव । (डा० शीलः गच्छति ज्ञानव्रतः पेयचूषणं करोति । द्वौ जनौ परस्परं बाहूबाहवियुद्धं कुर्वन्तौ पततः । चित्रा ज्ञानव्रतश्च तत्राकृष्टौ भवतः । एकः श्रमवीरः समागत्य उभौ पृथक् करोति ।)

प्रथमः—त्यज्यतामहमेनं व्यापादयिष्यामि ।

द्वितीयः—त्यज्यतामयमद्य न भविष्यति ।

श्रमवीरः—का वार्त्ता विद्यते ।

प्रथमः—कुमारिनीतायाः दुःखाकरणेऽस्य कोऽधिकारः ?

द्वितीयः—अधिकारपृच्छायां त्वं कः ? अपि त्वं तस्याः पतिः ?

श्रमवीरः—बहिः चल । बहिरेव निर्णयो भविता । (उभौ नयति)

चित्रा - अशोभनं जातं यत् श्रमवीर आगतः । एतौ दण्डान्नेव मोचयिष्येते । शल्यक्रियाद्वारा अनयोर्हृदयपरिवर्त्तनं करिष्यते ।

ज्ञानव्रतः—क इमे श्रमवीराः भवन्ति ?

चित्रा—शारीरिकश्रमस्तु यन्त्रमानवैर्विधीयते किन्तु शासनस्य

निखिलं कार्यम् बौद्धिकश्रमदानेन चलति। येषां श्रमदानं शासनमंगीकरोति सम्माननार्थं ते श्रमवीराः कथ्यन्ते।

ज्ञानव्रतः—श्रमदानम्? अस्माकं युगेऽपि श्रमदानस्य महती चर्चा आसीत् किन्तु शैलीभिन्नता लक्ष्यते। श्रमदानस्य का शैली वर्तते?

चित्रा—प्रत्येको जनो यदा दशवर्षायुषम् प्राप्य स्वकीयां शिक्षां समापयति तदा प्रतिस्पर्धिन्यः परीक्षाः भवन्ति। तेषु येषां सेवा राष्ट्रद्वारा स्वीकार्या भवति तान् श्रमदानाय आमन्त्रयति। तदर्थं तेभ्यः किमपि वेतनं नो मिलति यतो जीवनोपयोगिनी समस्ता आवश्यकसामग्री प्रत्येकस्मै जनाय समाजस्य सकाशाद् शुल्कं विना लभ्यते।

ज्ञानव्रतः—येषां सेवा राष्ट्रद्वारा नैव स्वीक्रियते?

चित्रा—ते कार्यहीनास्तिष्ठन्ति। तेषां समीपे किमपि कार्यं करणाय न तिष्ठति। अस्माकं युगस्य इयमेका समस्या वर्तते। यत् इदानीं यावत् केवलं दशप्रतिशतजनेभ्योऽधिकाय श्रमदानस्यावसरो न मिलति।

ज्ञानव्रतः—तर्हि संगीतमपि साहित्यं कलाश्चपर्याप्तं विकसिताः भविष्यन्त्यस्मिन्युगे।

चित्रा—संगीतं तु भवान् श्रृणोत्येव। चित्रकारा अपि इयानादर्शवादिनो जाताः यत् शिरःपादविहीनैस्तेषां चित्रैर्जना अरुचिं प्राप्ताः।

ज्ञानव्रतः—साहित्यं च?

चित्रा—भवदीययुगसदृशातिवृद्धाकाराणि पुस्तकानि साम्प्रतं कोऽपि पठितुं नैव वांछति। एतदर्थं तानि नैव लिख्यन्ते। अस्माकं संक्षेपकयन्त्राणि [कम्प्यूटर मशीन] बृहदाकाराणि पुस्तकानि कलाभिरेव संक्षेपयन्ति। इदानीं तु पुस्तकानामुपयोगः केवलं पुस्तकालयेषु उद्धरणाय एव भवति।

ज्ञानव्रतः—चित्रे! पुस्तकानां संक्षिप्तीकरणं कथं जायते?

चित्रा—नितान्तं सरला प्रक्रिया वर्तते। यथा रामः रावणमवधीत्, रामः कुम्भकर्णमवधीत्। रामो राक्षसानवधीत्। इति वाक्यत्रयमेकस्मिन् एव वाक्ये "रामः रावणकुम्भकर्णावन्यराक्षसांश्च जघान" आगच्छति। इदमेव कुर्वन्ति इमानि यन्त्राणि।

ज्ञानव्रतः—आश्चर्यम् ।

चित्राः—ईदृशानि बहूनि आश्चर्याणि भवन्तोऽवलोकयिष्यन्ति ।

रोहणः—(प्रविश्य) अपि भवन्त एव श्रीज्ञानव्रतमहोदयाः सन्ति ?

ज्ञानव्रतः—अथ किम्, मदीयं नाम "ज्ञानव्रत" इत्यस्ति । श्रीमतः ?

रोहणः—विश्वपतेः सोमगणस्य सकाशाद्भवतः त्रैमासिकविश्वदर्शन-कार्यक्रममादाय समागतोऽहं रोहणाभिधानः ।

ज्ञानव्रतः—उपविशतु भवान् । कदा भवन्तः समागताः ?

रोहणः—इदानीमेव समागच्छामि, अधिकतमं पंचदश कला व्यतीताः ।

ज्ञानव्रतः—किन्तु विस्तृतायाः यात्राया परिश्रमस्य चिह्नानि भवति कथं नालोक्यन्ते ?

रोहणः—श्रमः भवत्येव न हि चिह्नानि कथं वीक्ष्येरन् ?

ज्ञानव्रतः—कथं ? राकेट (क्षेप्यास्त्र) द्वारा एव भवन्तोऽन्तर्ग्रहीय-यात्रां कुर्वन्ति ?

रोहणः—तानि दिनानि गतानि श्रीज्ञानव्रत ! इदानीं तु राकेट (क्षेप्यास्त्र) द्वारा निर्जीवानि यन्त्राणि यन्त्रमानवाश्चाः यात्रां कुर्वन्ति ।

ज्ञानव्रतः—जीवधारिणः ?

रोहणः—यात्रासंस्थाने जीवधारिणामणून् छिन्नभिन्नान् कृत्वा तेभ्यः पुनरपि प्रतिकृतिः प्रदीयते । अनया शैल्या यात्रा सरला भवति, समयाधिक्यं न जायते, यात्रायां श्रमोऽपि नैव भवति ।

ज्ञानव्रतः—भवतां प्रगतिराश्चर्यं संबर्द्धयति ।

चित्रा—इदानीं त्वद्य प्रथमो दिवसो वर्तते ।

[पटाक्षेपः]

## चतुर्थं दृश्यम्

(शरत्कालः २३ सितम्बर मासः सन् २०६०। विश्वयात्रायाः पश्चात् स्वकीये कक्षे ज्ञानव्रतः कुमार्या चित्रया सह)

ज्ञानव्रतः—अस्मिन् विश्वभ्रमणे भवत्या मम पर्याप्तसहायता कृता। भवत्या सह मया बहूनि नक्षत्राणि दृष्टानि, बह्वश्चमत्कारा अपि दृष्टाः। अस्माकं युगे मे पौराणिककल्पनामात्रमासीत्। चित्रे! अहमतीव कृतज्ञोऽस्मि भवत्याः।

चित्रा—इदं तु मदीयं कर्तव्यमासीत्। भवन्तः सन्तुष्टा इदं मदीयं सौभाग्यम्।

ज्ञानव्रतः—कियत् सुन्दरं भवेत् यत् भवती जीवनपर्यन्तमेवमेव मदीयमार्गप्रदर्शनं कुर्यात्।......अहं बहु श्रान्तोऽस्मि चित्रे......इदानीं त्वभिलाषो जायते......

चित्रा—कोऽभिलाषो जायते......

ज्ञानव्रतः—अभिलषामि यदेका पत्नी स्यात्, अन्यच्च...अन्यच्च...

चित्रा—किमन्यत्?

ज्ञानव्रतः—कतिपयबालकाः।

चित्रा—कठिनं किमत्र? यन्त्राणि बालकान् जनयन्ति। श्वः एव भवान् मया सह शिशूत्पादनकेन्द्रं चलतु। यदि भवान् तत्कृते योग्यो भविष्यति तर्हि सहस्रशः शिशूनां पितृत्वं प्रतिपत्स्यते।

ज्ञानव्रतः—(साश्चर्यम्) कथमिदम्?

चित्रा—भवता "बाई" (शुक्रकीटाणवः) "क्रोमोसोम" नलिकायां सुरक्षिताः विधास्यन्ते। तेषु च स्त्रीणां" "एक्स" क्रोमोसोम संयोगं कारयित्वा परीक्षणनलिकाद्वारा सहस्रशो बालकाः समुत्पादयिष्यन्ते।

ज्ञानव्रतः—(सव्यंग्यम्) पत्नीं विना? कुमारः, पिता?

चित्रा—अद्यतनयुगस्य कापि सुन्दरी भवतः पत्नीत्वे स्वकीयं सौभाग्यं स्वीकरिष्यति चेत्...

ज्ञानव्रतः—चेत्......

चित्रा—चेत् भवतः प्रजननविरोधिनी शल्यक्रिया "वासेक्टामी" संवृता स्यात्, यतः इदम् विधानोल्लंघनं मन्यते यत् समाजद्रोहसीमानं यावत् प्राप्नोति।

ज्ञानव्रतः—यदि च स्वेप्सिता पत्नी मिलेत् तर्हि इदमपि कारयितुं शक्यते।

चित्रा—(क्षणिकशान्तेरनु) त्यजतु इमां वार्त्ताम्। इदं सूचयतु भवान् यत् "धरित्रीलालिताः" राजनीतिकदलपत्रस्य किमुत्तरं दीयते।

ज्ञानव्रतः—लिख। (चित्रा लिखति)

महोदय!

अहं भवतामतीव कार्तज्ञ्यं वहामि यदहं भवद्भिर्योग्योऽभिमतः। मदीयं विनम्रं विनिवेदनमास्ते यत् स्वतन्त्रविचारकाय राजनीतिकदायित्वसमर्पणं कियदौचित्यं भजते? एतस्मिन्विषये दलस्य महासमितिः पुनर्विचारं विधाय यदि मामेव प्रत्याशिनं घोषयितुमभिलषेत्तर्हि भवदीयस्नेहाग्रहः मया स्वीकरणीयो भविष्यति। यदि च निम्नाङ्कितः पंचसूत्रात्मकः कार्यक्रमः दलेन पञ्चशीलरूपेण स्वीकृतो भवेत्।

१. स्वस्थव्यक्तीनां सन्ततिनिरोधिनीं शल्यक्रियां न विधाय स्वस्थस्त्रीभ्यो मातृत्वं प्रदीयेत। येन स्त्रीपुरुषयोरनुरागः वृद्धिं गमिष्यति, जीवनकामनया मनुष्यः दीर्घायुर्भविष्यति।

२. प्रत्येकस्मिन्नक्षत्रे कलानां पुष्पाणां प्रदर्शिनीं विधाय तदुत्पादनाय जनाः प्रोत्साहिताः क्रियेरन्। अनेन तेषां जीवनं परिवर्तनमागमिष्यति।

३. चित्रकला अन्याः कलाश्च सम्मानिता भवेयुः यासां विकासः अनुभूतिद्वारा जायते। अनेन कार्यहीनता दूरं गमिष्यति।

४. संक्षेपकयन्त्राणां [कम्प्यूटर मशीन] प्रयोगः केवलं शासनिककार्ये एव भवेत्। सर्वसाधारणरुचिः साहित्यस्य पठनपाठननिर्माणदिशि आकृष्येत। अनेन श्रेष्ठविचारका भविष्यन्ति।

प्राध्यापक श्री आनन्दझा:

# सुन्दरीदण्डकम्

जयजय प्रोच्छलत्तुङ्ग दीव्यत्तरङ्गावलीलास्यसुव्यक्तफेनाट्ट-हासप्रभाजालसंछादितानन्तविस्तारशोभासनाथामृताम्भोधि-मध्यस्फुरन्सन्स्वपुष्पामितामोदमाद्यद्दिगन्ताप्रसंख्यातनीपाटवी-युङ् मणिद्वीपमध्यस्थमाणिक्यगोमेदवैडूर्यमुक्ताप्रवाला-तिपीताभसत्पुष्परागप्रविक्रान्तहृरिद्विति द्योतिनीलावि-रत्नावलीभासमुद्भासितत्वाद्यथार्थस्वनाम्ना परिभ्राजमाने तु कल्पद्रुमाणां सुमप्रोत्थतृप्तिप्रदामन्दगन्धप्रबन्धप्रमत्ताद्विरे-फावृतानां प्रवाट्या समावेष्टितत्वेन विभ्राजमाने ह्यमाने विज्ञानाऽकृति सन्दधाना महामानिशङ्कप्रमुखामरा:, कोऽपि नो यत्र पुंवेषधृक् स्थातुमर्हेत्कदाचित्क्वचित्तत्रमञ्चे शिवाऽकार धारिण्यलं निस्तुलाभिख्य सर्वेशपर्यङ्किकां स्वाङ्गसङ्गैरभङ्गै-रलङ्कुर्वती सच्चिदानन्दरूपा परिध्यायसे योगिभिर्विमलान्त-र्युतैरच्युते ! त्यक्तसर्वेषणैरप्ययं किं पुनर्व्यक्तसर्वेषणै: । सुन्दरित्वं स्फुरद्रत्ननिक्वाणभृत्स्वर्णकाञ्चीसनाथेन मध्येम

विभ्राजमाना परिक्षीणतामादधानेन किञ्च स्तनाभ्यामुभाभ्या-मिभप्रार्भकोत्तुङ्गकुम्भप्रतिस्पर्धया संयुताभ्यां समुद्भासमाना शरत्पौर्णमासी समुद्य निरङ्कप्रभाजालसूल्लासिचन्द्रं तिरस्कुर्वती सान्द्रसिन्दूरबिन्दूल्लसद्दीप्तहास्यस्फुरत्यङ्कजास्योद्गतेनामितेन स्वकीयेन सौन्दर्यसारेण, हारेण तारेण सुस्थूलतारामयेणेव सन्मौक्तिकीयेन चात्यन्तनैर्मल्यभाजा लसन्ती हसन्ती सदा वीक्ष्य भक्तानशेषान् सुरांश्चासुरान् योजयन्ती जयन्ती महा-नन्दसन्दोहसिन्धुप्रवाहैस्ततैस्सर्वतो धारयन्ती कराब्जैश्चतुर्भि-र्धनुर्बाणपाशाङ्कुशान् दीनरक्षास्वभक्तादिपक्षक्षयेषु प्रदक्षां-स्त्वमेका परानन्ददात्री परानन्दरूपाऽपि सर्वस्वरूपा परं मोह-यन्ती स्वरूपैरहो दुर्निरूपैर्भवं देवदेवं शिवं भावयन्ती भवम् । मेऽस्तु सर्वाकृतिस्ते परार्चा, ध्रुवं जल्पनं ते जपश्शिल्पमस्तु क्रिया तेऽथ मुद्रा, गतिः प्रोल्लसद्दक्षिणा दक्षिणेष्टाप्तये, प्राहुति-र्भक्षणं रक्षिणी मे प्रणामोऽस्तु सर्वं हि संवेशनं यत्सुखं सर्व-मात्मार्पणं निश्चितम् । यो मनुं ह्रीमिति प्रह्वभावेन ते भाव-यत्यम्ब सर्वा सुसिद्धिः करे, नात्र सन्देहलेशोऽस्ति मां बालकं पालयत्वं महेशि ! प्रभूतं देवि श्रीसुन्दरि प्रोदितार्कारुणे ! देव्यपर्णे सुकारुण्यपूर्णे ! नमस्तेऽस्तु नित्यं नमस्तेऽस्तु नित्यं नमस्तेऽस्तु नित्यं नमस्तेऽस्तु नित्यं नमः ।

[ दण्डकवृत्ते विरचितं काव्यम् ]

भट्टः श्री वेणुगोपालकृष्णः

# तत्तु समन्वयात्

[ अस्मत् "समन्वयसूत्रविचार" ग्रन्थादुद्धतोऽयं कश्चित् भागः । मया तत्र तु-शब्दस्य शतार्थाः प्रदर्शिताः येषां केचिदिह दीयन्ते ]

एवं शास्त्रप्रमाणकान् शास्त्राऽप्रमाणकांश्च 'शास्त्रयोनित्वात्' 'जन्माद्यस्य यतः' इति द्वाभ्यां सूत्राभ्याम् समाधाय,शास्त्रप्रमाणविप्रतिपत्तय आगच्छेयुरित्याशंकयाह तत्तु समन्वयात्' इति—

यच्चोक्तम् 'अनेन शास्यत इति शास्त्रम् - किं तत् ? शास्त्रविषयस्य विषयित्वम् तथैव ब्रह्मापि शास्यते शास्त्रे' श्रोतव्यो मन्तव्यो निदिध्यासितव्यः इत्यादि वाक्यैरिति तत्तुच्छमिति तु शब्द इति—कस्मात् ?—समन्वयात्, मोक्षभूतब्रह्मणोऽशरीरत्वान्नित्यत्वाच्च, अत्र नित्य शब्दस्य सर्वविक्रिया रहितमित्यर्थः, तथाहि विक्रियमाणा गुणास्सांख्यानाम् पृथिव्याद्या नास्तिकानां च नित्यशब्दलक्षिते ब्रह्मण्यप्यतिव्याप्त्या मा भवेयुः, तस्मात् स्वर्गादिविषय इवास्मिन् ब्रह्मविषये न हि शासितुं शक्नोति शास्त्रम् ।

यच्चोक्तम् आम्नायस्य क्रियार्थत्वादक्रियार्थानां वेदान्तानामानर्थक्यमिति तत्तुच्छमिति तु शब्द इति, कस्मात् ? —अज्ञाननिवृत्तिपूर्वकक्रियार्थत्वात्तस्यानिवृत्तेः क्रियायां समन्वयादिति ।

यच्चोक्तम्, वेदान्तस्य क्रियार्थस्य वक्तव्यम् ब्रह्मक्रियाकारकफलमिति तत्तुच्छमिति तु शब्द इति, कस्मात् ?—क्रियार्थक्रियाकारकफलयोस्समन्वयात्, तथाहि कर्मक्रियार्थविषये क्रियाकारकफलं जन्यम्, नात्र ब्रह्मविषये, तत्केन कं पश्येदितिश्रुतेः, यथा कण्ठगतहिरण्यहारवती नारी

हारभ्रंश भ्रांतिरूपाऽज्ञाननाशानन्तरम् पुनर्हारमापन्नवतीत्याद्युपचारादेव ह्यज्ञाननिवृत्तिपूर्वकक्रियार्थत्वम्, तथैव ब्रह्मविषये प्यतदभ्रांतिनिवृत्तिपूर्वकक्रियार्थत्वम् ब्रह्मावाप्तिविषये सा धनोपचारतयाऽज्ञानभ्रांतिनिवृत्तिक्रियार्थत्वम् प्रतिपादितमिति समन्वयात्।

यच्चोक्तम् परमार्थतया ब्रह्मण्यनुपचारतया वक्तव्यम् वेदान्तानामानर्थक्यमिति तत्तुच्छमिति तु शब्द इति, कस्मात् ?—तत्रैव समन्वयात्, क्रियार्थाऽभावो नहि वेदान्तानामानर्थक्यमुत्पादयितुं शक्नोति। ब्रह्म शास्त्रेण ज्ञायत इति विषयज्ञानोपपत्तिप्रयोजनोपपत्तेः, तस्य ज्ञानस्य ब्रह्मणि समन्वयात् सार्थत्वमेव वेदान्तानामित्युपपन्नम्।

यच्चोक्तम् ज्ञायते ब्रह्म जगदनुवृत्तिलक्षणात् कार्याज्जगत एवेत्यलं शास्त्रज्ञानेन, तथाहि वेदान्तानां पुनरुक्तिदोषानर्थक्यमिति तत्तुच्छमिति तु शब्द इति, कस्मात् ?—तथाभूतविज्ञानस्यापि शास्त्रप्रमाणत्वात्। तस्य प्रमाणस्य शास्त्र एव समन्वयात्, 'यतो वा इमानि भूतानि जायन्ते' इति श्रुतेः।

यच्चोक्तम् 'जायन्त' इति धातुमात्रप्रयोगान्नहि विज्ञायतेऽनुवृत्तिभावता ब्रह्मणो जगत्यारोपितेति यतो ब्रह्मज्ञानम, तथाध्यारोप्यमाणाधिष्ठानज्ञानादेव सद्ज्ञानोपपत्तिः, तेन विषयज्ञानोपपत्तेः ज्ञायते ब्रह्मेत्यलम् जायन्त इत्यादिभ्यो येषाम् तथा पुनरुक्तिभूतानर्थक्यमिति तत्तुच्छमिति तु शब्द इति, कस्मात् ?—जायन्त इति धातुमात्रप्रयोग एव जगदनुवृत्ति भावाध्यासादेरुपपत्तेः, मृदुत्पन्नो घट इत्यत्र मृद्गुणा घटे संक्रामन्तीति वक्तव्यस्याऽभावात् पुनश्च तस्माज्जातमित्यत्र जातशब्देन कारणगुणनीलनित्यत्वं च, कम्बुग्रीवाद्याकारस्य वर्तमानकालनित्यत्वालम्बनप्रतीतिश्च सूचिते, पुनश्च जातमिति शब्देन घटकम्बुग्रीवाद्याकारस्य समवायिविनाशित्वम् सूचितम्, पुनश्च जातमिति शब्देन यो नीलगुणो घटे दृश्यत इति श्रूयते स न हि घटगुणोऽयं जातो मृद् इति धर्मविलंबी सूचितम्, पुनश्च जातमितिशब्देन घटः कम्बुग्रीवाद्याकारावच्छिन्नो विनश्य इति सूचितम्॥

यच्चोक्तम् कारणगुणाः कार्ये संक्रामन्तीति बुद्धिविषयकशास्त्रादेवावगम्यते न हि जातमिति शब्देन श्रुतिगतेनेति प्रतिपन्नमानर्थक्यम् वेदान्तानामिति तत्तुच्छमिति तु शब्द इति, कस्मात् ?—तस्य बुद्धिविषयकशास्त्रस्यापि श्रुतिशब्द एव समन्वयात्, अन्यथाऽसंभवोपपत्तिश्च, तथाहि कार्यकारणजन्यजनकसंबंधमन्तरेण गुणसंक्रमणज्ञानासंभवात्, अन्यथा वस्त्रनिर्माणकालकार्यभूतस्य वस्त्रस्य तत्रस्थितयादृच्छिकरासभादेरपि कार्यकारणसंभवोपपत्तेस्संभवः, न चातो गुणदर्शनादस्मादेतज्जातमिति पश्चाद्वर्तत इति वाच्यम्, तद्गुणाधारस्य कारणस्य शास्त्रयोनित्वादत्रब्रह्मविषये। नच गुणग्रहणादनुक्तो गुणी गृह्यत एवेति वाच्यम्। गुणिज्ञानमन्तरेण तस्यायं गुण इति निश्चेतुमशक्यत्वात्, पुनश्च यत्रगृहीतो गुणस्य तस्यैवेति निश्चयापत्तेः।

यच्चोक्तम् प्रत्यक्षविषयोपलंभात् अनुमानप्रमाणस्य ग्राह्य एव संबंधो जगद्ब्रह्मणोरैक्यम् शास्त्रवचनेनेति तत्तुच्छमिति तु शब्द इति। कस्मात् ?—उक्त समन्वयात्, दृष्टार्थस्यायं गुण इति विचारसंभवोपपत्तेः, न हि चन्द्रं दृष्ट्वा प्रकाशगुणोऽन्यस्येति कश्चिन्मन्यते। प्रकृष्टप्रकाशशब्दयोश्चन्द्र एव समन्वयं प्रपन्नयोर्हि शब्दशक्तिः, स एव समन्वय इत्यस्माद्धेतोः।

यच्चोक्तम् प्रत्यक्षविषयगृहीतं सत्त्वम् प्रकृष्टप्रकाशशब्दश्चन्द्रमसीव ब्रह्मण्युपयुज्येतेति तत्तुच्छमिति तु शब्द इति। कस्मात् ?—तथाविधाऽसमन्वयस्यैव समन्वयाच्छास्त्रस्य। न ह्यविक्रियं सर्वव्यापि सर्वकारणं ब्रह्म कस्यापि प्रत्यक्षविषयो भवतीति निराकृतत्वात्पक्षस्य। 'आत्मैवाभूदितिश्रुते' रात्मप्रत्यग्भावविरोधित्वाद्ब्रह्मणोविषयत्वम् कस्येति ब्रह्मणोविषयत्वानुपपत्तेः।

यच्चोक्तमुक्तम् युष्मद्भाष्यकारेणैव 'अस्मत्प्रत्ययविषयत्वादिति, तत्तस्य विषयत्वसंभवोपपत्तेरस्तु प्रमाणवेद्यम् ब्रह्मेति तत्तुच्छमिति

तु शब्द इति । कस्मात् ? तत्रोक्त विषयस्यापि शास्त्र एव समन्वयात् । अस्मत्प्रत्ययगोचरं ब्रह्मेति शास्त्रादेवावगम्यते हि ।

यच्चोक्तम् विषयिण्यस्ति विषयत्वम्, ब्रह्मणोविषयाऽभावे जगदारोपणमसदिति वक्तव्यमिति तत्तुच्छमिति तु शब्द इति । कस्मात् ?— प्रत्यक्षमेवाऽविषयारोपणम्, नीलं नभ इत्यादाविवेति समन्वयात् । अप्रत्ययन भस्यत् द्गुणारोपणोपपत्तेरिति खण्डितत्वात्पूर्वपक्षस्य ।

•

## नवीना काव्यरीतिः

अतिपरिचयदोषात्प्रौढबालेव वाणी
न रचयति विनोदं प्राक्तनानां कवीनाम् ।
अभिनवकविवाचा काऽपि रीतिर्नवीना
युवतिरिव विधत्ते प्रौढमानन्दमन्तः ॥

—मृगाङ्कलेखानाटिकाकारश्रीविश्वनाथदेवस्य

श्रीअनन्तत्रिपाठिशर्मा (संसत्सदस्यः)

## संस्कृतपत्रिकाः तासां प्रसारश्च

संस्कृतभाषा अस्माकं संविधाने चतुर्दशसु भाषासु अन्यतमात्वेन स्वीकृता वर्तते। अस्माकं सर्वकारेण च अन्यासां भाषाणामिव संस्कृत-भाषाया अपि अभिवृद्धय प्रोत्साहनायापि दृष्टिर्दीयत एव। एतदर्थं केन्द्र-सर्वकारेण कश्चन स्वतन्त्रो विभागः परिकल्पितः वर्तते। प्रतिप्रदेशं चासंख्याः संस्कृतपाठशालाः कलाशालाश्च वर्तन्ते। प्रतिराज्यं च संस्कृत-विभागस्य परिचालकः कश्चन स्वतन्त्रविभागो वर्तते। संस्कृतशिक्षा च संस्कृतविद्यालयेषु आङ्ग्लविद्यालयेष्वपि दीयमाना वर्तते। सर्वकारस्य पाञ्चवार्षिकयोजनासु केषांचन प्राच्यविश्वविद्यालयानां (Oriental Universities) व्यवस्थाऽपि क्रियमाणा आस्ते। विद्यार्थिनां परीक्षणाय समितयो गोष्ठ्यश्च (Associations and Boards) संस्थापिताः। आन्ध्रमान्द्राजहिन्दुप्रभृतयो विश्वविद्यालया अपि संस्कृतपरीक्षाः परि-चालयन्ति। प्रतिवर्षं च बहवो विद्यार्थिनः विभिन्नपरीक्षासु कृतकृत्या भवन्ति। एवं सुविशाले क्षेत्रे वर्तमानेऽपि संस्कृतपत्रिका आशानुरूपतो नैव समेधन्त इति सप्रश्रयं निवेदयामि।

इदानीं भारतवर्षे ४० संख्याकाः पत्रिका वर्तन्ते। साधारणतः पत्रि-कास्त्रिधा विभक्तुं शक्यन्ते संवादवाहिकाः, साहित्यिक्यः समालोचना-त्मिकाश्चेति। संवादवाहिका दैनिक्यः अर्द्धसाप्ताहिक्यः साप्ताहिक्यश्च भवितुमर्हन्ति। साहित्यिक्यः समालोचनात्मिकाश्च साप्ताहिक्यः पाक्षिक्यो मासिक्यो, त्रैमासिक्यः, अर्द्धवार्षिक्यो वार्षिक्यश्च भवन्ति। तत्र दैनिकी संस्कृतपत्रिका संस्कृतिनामिका एकैव प्रकाशिता वर्तते।

अर्द्धसाप्ताहिक्यश्च नैव सन्ति। साप्ताहिक्यौ द्वे एव वर्तेते। केवलं समालोचनात्मिका:संस्कृतपत्रिका नाद्यावधि प्रकाशिता:। साहित्यिक्यश्च या: सप्तत्रिंशत् पत्रिका: प्रकाश्यन्ते, तासु पञ्चषा विहाय अन्या: सर्वा अपि नियतकालं नैव प्रकाशिता भवन्तीति सविषादं तत्रभवतां पुरत उपस्थापयामि। याश्च पञ्चषा: पत्रिका नियतकालं प्रकाशिता भवन्ति ता: सर्वा अपि अनुष्ठानविशेषै: परिचालिता:। इदमपि च सहृदयानां पुरत: करोमि यदेता: सर्वा अपि भावेन रसेन रीत्या वृत्त्या धीरण्या गाम्भीर्येण च नावहीयन्ते। सम्पादकाश्च नापरिणतबुद्धय:, नापि औदासीन्याश्लिष्टमूर्तय:। आत्मनोऽनुभवेन दृढं प्रतिपादयामि नार्थाभाव आसां विलम्बितप्रकाशने मुख्यं कारणं भवति। संस्कृतपत्रिकापरिचालका नार्थाशया पत्रिका: प्रकाशयन्ति। अर्थक्षतिरवश्यम्भाविनीति ते विज्ञायैव सुरभारतीसेवायै पत्रिका: प्रकाशयन्ति, परन्तु यथाकालं प्रकाशयितुमनीशा अन्त: परं खिद्यन्ते। सम्पादकेषु बहवो व्ययपरिमाणं यावच्छक्यं संकोचयितुं प्रयतन्ते, सकलं च कार्यजातं स्वयं कुर्वन्तीति विजानामि। सम्पादकाश्च यथाकालं पत्रिका: प्रकाशयितुं परं प्रयतन्ते। परन्तु पत्रिकाणां प्रकाशने बहवोऽन्तराया अन्तरा आपतन्ति।

•

तदेवं संस्कृतपत्रिकाणामावश्यकता वर्तते नवेति परीक्षणीयं भवति। भारतवर्षस्य गर्वस्य साधनं भवति वस्तुद्वयं भारतीया संस्कृति: भारतीयं च संस्कृतम्। संस्कृतं हि भारतवर्षस्य सार्वजनीना भाषा। हिन्दी तावत् राजभाषात्वेन स्वीकृता भवतु नाम, तदपेक्षया संस्कृतस्य कोऽपि उत्कर्षो विद्यत एव। दाक्षिणात्यास्तावत् हिन्दीं नेच्छन्ति, परन्तु संस्कृतमाद्रियन्ते। न केवलं भारते वर्षे विदेशेष्वपि परस्परं भावानामादानप्रदानार्थमाङ्गलमिव संस्कृतमेव अवलम्बनं भवति। भारतवर्षे सर्वास्वपि भाषासु संस्कृतस्य प्रभाव: प्रतिफलितो वर्तते। सिन्धीहिन्दीगुजरातीमहाराष्ट्रीकाश्मीरीबङ्गलाओडिआप्रभृतिषु प्रतिशतं षष्टि: शब्दा: संस्कृतरूपा:, विंशति: तद्भवा:, केवलं विंशतिरेव देश्या:। तामिलवर्जमन्यासु द्राविड-

भाषासु प्रतिशतं पञ्चाशत् संस्कृतशब्दा वर्तन्ते। तामिल्भाषायामपि प्रतिशतमिदानीं त्रिंशत् संस्कृतशब्दा वर्तन्ते। संस्कृतभाषाया उन्नतौ प्रकारान्तरेण सर्वासामपि मातृभाषाणामुन्नतिः सम्भवति। विशेषतः संस्कृतसाहित्यं सरसं समृद्धं विशालं च। एतस्य साहित्यस्य प्रतिरूपकं साहित्यं जगति विरलम्। अतो भारतीयायाः संस्कृतेः प्रचारार्थं संस्कृत-भाषाया अभिवृद्ध्यर्थं संस्कृतसाहित्यस्य चोपबृंहणाय संस्कृतपत्रिकाणां विशेषत आवश्यकता वर्तते। इदानीं याः पत्रिका वर्तन्ते, ततः शतगुणाः पत्रिका अपेक्ष्यन्ते।

इदानीं पत्रिकाणां प्रकाशने येऽन्तरायाः सम्भवन्ति, तन्निराकरणो-पायानधिकृत्य किञ्चिद्विवक्षुरस्मि।

भारते वर्षे प्रबन्धॄणामभावो नास्ति। असंख्याः कृतविद्या विपश्चितो वर्तन्ते। ते हि स्वगेह एवावस्थाय लोकलोचनगोचरताम् लभमानाः कालप्रभावेण विलीयन्ते। न केऽपि तेषां नामानि ज्ञातुं प्रभवन्ति। प्रसङ्गेऽस्मिन् आलङ्कारिकस्य रुद्रटस्य वचनमुद्धरणमर्हति। स हि तान् स्वे हर्म्ये कुलकन्यका इव कृतादरान् मन्यते। इयं हि तदुक्तिः—

सत्यं सन्ति गृहे-गृहे सुकृतिनो येषां वचश्चातुरी
स्वे हर्म्ये कुलकन्यकेव लभते ज्ञातैर्गुणैर्गौरवम्।
दुष्प्रापः स तु कोऽपि कोविदमणिर्यद्वाग्रसग्राहिणी
पण्यस्त्रीव कलाकलापकुशला चेतांसि हर्तुं क्षमा।

तत्रभवन्तो नीलकण्ठविजयचम्पूकारा अपि उदासीनान् कवीनधि-कृत्य परं खिन्ना उदगिरन्ति—

यः संरम्भः कृतिविरचने दुष्कवीनामभेद्यो
यच्चैकाम्यं तदुचितपदान्वेषणे चित्तवृत्तेः।
हन्तैतच्चेदपि कवयतामन्ततस्त्रीण्यहानि
स्यादेवं किं सरसकविताराज्यदुर्भिक्षयोगः॥

तेषां प्रोत्साहनं पत्रकाराणां प्रथमं कर्तव्यमापतति। से तावत्तथा

प्रोत्साहनीया येन ते स्वसुभाषितैः सहृदयान् पत्रिकाश्चावर्जयेयुः। सर्वैरपि संस्कृतपत्रकारैरत्र किमपि अवधानं दातव्यमिति कामयेऽहम्। इदानीं हिन्दी राष्ट्रभाषा भवति। सैषा तयैव लिप्या लिख्यते, यया किल संस्कृतं लिखितं भवति। अक्षरसंयोजकानां वृत्तिर्नैव नीचस्तरमवगाहते। अतः संस्कृते लब्धप्रवेशाः पण्डिता यदि अक्षरसंयोजका भवेयुस्तर्हि संस्कृतपत्रिकाप्रकाशकानां कोऽपि क्लेशातिशयो निर्यातितो भवेत्। अतो ये संस्कृते मध्यमपरीक्षां यावत् पठित्वा पाठाय जलाञ्जलिं ददतो विरमन्ति, ते यथा अक्षरसंयोजकानां वृत्तिमाश्रयेयुः, तत्र संस्कृतपत्रिकाकारैर्लेखनी चालनीयेति प्रस्तौमि।

न काऽपि संस्कृतपत्रिका स्वावलम्बनाऽस्तीति विदितचरमेव सहृदयानाम्। संस्कृतपत्रिकाणां च ग्राहकसख्या नगण्येति च जानन्त्येव सहृदयाः। ये तावद् धनाढ्या आङ्गलसाहित्ये बद्धादरा कृतविद्यास्ते तु संस्कृत नाद्रियन्ते। ये किल संस्कृते बद्धादरा पण्डितास्ते तु स्वल्प वेतनं लभमाना स्वजीविकामपि निर्वोढुमनीशाः कथमिव संस्कृतपत्रिका धनदानेन स्वीकुर्युरिति अविसंवादि सत्यम्। अतएवाहं स्वशिष्येषु मित्रेषु चात्मनः प्रभावेण पत्रिकां विक्रेतुं प्रभवन्नपि न तथा करामि। परन्तु ग्राहकाणां पाठकानां चाभावे अस्माकं सकलोऽपि समुद्यमो विफलपरिणामो भवेदिति नास्ति सन्देहः। अन्यासां पत्रिकाणां विज्ञापनप्रकाशनेन कोऽपि आयो भवति। ग्राहकाणां च संख्याधिक्याभावात् न केऽपि व्यवसायिनः अस्माकं पत्रिकाभ्यो विज्ञापनं दातुमीहन्ते। न च तेऽसमीहितकारिण इति तानवगातुं प्रभवामि। अतः सर्वैरपि यथा पत्रिकाणां ग्राहकसंख्या वर्धेत, तत्र बद्धपरिकरैर्भावतव्यमिति निवेदयामि।

ग्राहकसंख्याया अभिवृद्धये प्रथमतोऽस्माभिः परस्परं सहयोगः स्थापनीयः। सर्वैरपि संस्कृतपत्रिकाकारैः समवेत्य काचन संस्था स्थापनीया, यस्यामस्माकं सुखदुःखयोर्भावाभावयोश्च सम्यगेव परिशीलनं सम्भाव्येत। द्वितीयतो यादृशानां विषयाणां प्रकाशने लोकानामभिरुचिरनुकूला स्या-

दादरश्चाभिवर्धेत, तादृशा एव विषया यथा पत्रिकासु पदमादधीरन् तत्र सर्वैरप्यवधानं देयम् । भाषा यथा प्राञ्जला सरसा सुबोधा च सम्पद्येत, तथा प्रयत्नः करणीयः । पत्रिकाणामाकृतौ प्रकृतौ च काऽपि रम्यता प्रकट-नीया । एवं सति अवश्यं ग्राहकाणां संख्या काऽपि वर्धेत । परन्तु नैतत्प-र्याप्तम् । व्यक्तिविशेषा नैव ग्राहका भवेयुरिति जानामि । तथापि नास्मा-भिरुदासीनैरवस्थातव्यम् । सन्ति बहूनि अनुष्ठानानि, बहवः संस्कृत-पाठशाला, बहवः संस्कृतकलाशालाः, ग्रन्थागाराणि विश्वविद्यालयाश्च । तेषु तेषु च यथा अस्माकं पत्रिकाः कृतप्रवेशा स्युस्तदर्थं प्रयत्नः करणीयः ।

सर्वकारस्यापि अस्माकं पत्रिकाणां प्रचारे सुबहु कर्तव्यं वर्तते । उच्चाङ्गलविद्यालयेषु (High Schools and Secondary Schools) यत्र यत्र संस्कृत पाठः प्रचलति तत्र संस्कृतपत्रिकाणां ग्रहणे व्यवस्था कर-णीया । संस्कृतकलाशालासु यथा संस्कृतपत्रिका लब्धादरा भवेयुस्तदर्थं कोऽपि नियमः करणीयः । ग्रन्थालयेषु (Libraries) नागरिकागारेषु (Town Halls) गवेषणानुष्ठानेषु (Rosearch Institutions) यथा अस्माकं पत्रिकाः प्रवेशं लभेरन् तदर्थमपि व्यवस्था करणीया । प्रतिराज्यं शिक्षा-निर्देशकानां दृष्टिर्यदि आकृष्टा स्यात्, तदा अस्माकं मनोरथः कियत्स-फलो भवेदित्याशासे ।

विशेषतः सर्वकाराणामेकस्मिन् विषये दृष्टिमाकर्षामि । सदयास्ते यावच्छक्ति अनुदानेन अस्माकं पत्रिका उज्जीवयन्तु । जानाम्यहं केन्द्रीयः संस्कृतविभागः काभ्यश्चित् संस्कृतपत्रिकाभ्यः किमपि अनुदानं ददद्उप-करोति । परन्तु नेदं पर्याप्तं भवति । पत्रिकाणां प्रकाशने यावान् व्ययो भवति, तस्य भागद्वयं सर्वकारो वहतु । तदिदं चानुदानं नार्थाकारेण भवतु, परन्तु तावन्मूल्यानां पत्रिकाणां क्रयेण विभिन्नानुष्ठानेभ्यो वित-रणेन च साधितं भवतु । एवं क्रीत्वा वितरणे संस्कृतपत्रिकाणां कोऽपि प्रचारो भवेत्, पाठकसंख्या च वृद्धिमुपेयादिति विश्वसिमि ।

[ अखिल भारतीय संस्कृत साहित्य सम्मेलनस्याधिवेशने, २-१०-१९६६ दिवसे सभापतित्वेन कृतभाषणादुद्धृतोऽयमंशः ]

●

विमर्शः

डा० जयशङ्कर त्रिपाठी

# शापान्तो मे भुजगशयनाद् उत्थिते शार्ङ्गपाणौ

कालिदासेन स्वकीये मेघदूतकाव्ये यक्षमुखेन तस्य शापान्तस्य समय-निर्देशः कृत आसीत्—यस्मिन् दिने शार्ङ्गपाणिः भुजगशय्यात उत्थितो भवति तद्दिनं ममशा .ावधिरासीत्। अनेन ज्ञायते यत् तदानीं धार्मिक-सांस्कृतिक-मान्यतायां किमपि द्विनं शार्ङ्गपाणेः जागरणस्य पर्वत्वेन प्रतिष्ठितं भवति स्म। तद्दिनं शरत्कालासन्नं च वर्तते स्म, एतदपि ध्रुवमेव, यतः तास्मिन् छन्दसि कालिदासेन शार्ङ्गपाणेरुत्थानमनु परिणतशरच्चन्द्रिकाणां क्षपाणामपि उल्लेखो विहित अभूत्—

शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ<br>
शेषान्मासान्गमय चतुरो लोचने मीलयित्वा,<br>
पश्चादावां विरहगुणितं तं तमात्माभिलाषं<br>
निर्वेक्ष्यावः परिणतशरच्चन्द्रिकासु क्षपासु।

(उत्तरमेघः ५०)

साम्प्रतं तद्दिनं कार्तिकशुक्लपक्षस्य प्रबोधिनी एकादशी विद्वद्भिः मन्यते, स्वतन्त्रभारते तदेव दिवसं कालिदासस्य उत्तरमेघे निर्देशीकृत-शार्ङ्गपाणिजागरणकालत्वेन प्रमाणीकृत्य तद्दिनमेवाधिकृत्य कालिदास-जयन्ती-समारोहः समारभ्यते। एतद्निर्धारणे मन्ये तैः किमपि पुरात-

त्वात्मकमैतिह्यमनुसन्धानं नाधारीकृतम् । वैष्णव-सम्प्रदये या एकादशी-विषयिणीमान्यता आस्ते, तामेवानुकरोति विदुषामेतदनिर्धारणम् । किन्तु यदा पुरातत्त्ववेत्ता महामहोपाध्यायः डाक्टर वासुदेवविष्णु मिराशी महोदयोऽपि एतदेव दिनं कालिदास-युगे शार्ङ्गपाणेरुत्थानस्य तिथिं स्वीकरोति तदा वयं तद्विषये इतिहासचिन्तापरा भवामः। मिराशीमहोदयः स्वग्रन्थे इत्थं लिखितवान्—

"प्रतीत होता है कि सब एकादशियों में कार्तिक शुक्लपक्ष की प्रबोधिनी एकादशी अत्यन्तपुण्यप्रद मानी जाती थी क्योंकि लगभग आधे से भी अधिक (दान) उसकी पारणा के अवसर पर दिये गये थे। इस एकादशी का उल्लेख कालिदास ने अपने मेघदूत में किया है (शापान्तो मे भुजगशयानादुत्थिते शार्ङ्गपाणौ, मेघदूत श्लोक ११५)। उसके वर्णानुसार यक्ष का शाप उस तिथि को समाप्त होनेवाला था। उस काल में भी यह धारणा थी कि चारमास की निद्रा के पश्चात् भगवान् विष्णु उक्त तिथि को अपनी भुजगशय्या से उठते हैं। इसका निर्देश भी कालिदास ने किया है।"[1]

अस्मिन् उल्लेखे डा० मिराशी कालिदासस्योक्तौ निहितेतिहासमतिक्रम्य कल्पनापरो वर्तते, यतः 'भुजगशयनातुत्थिते सति शार्ङ्गपाणौ मे शपान्तो भविष्यति' इत्येतत्कथने न केनापि पदेन प्रबोधिनी-एकादश्या निर्देशं विहितवान् कविः। कथमिदं वक्तुं शक्यते यत्—"तदानीं समयेऽपि कार्तिकशुक्लपक्षस्य प्रबोधिनीं एकादशीं जना अतीवपुण्यप्रदां मन्यन्ते स्म, कालिदासस्य मेघदूते अस्या उल्लेखोऽवर्तत, अस्यां तिथौ भुजगशय्यातः विष्णुरुत्थितो भवति, एष निर्देशोऽपि कालिदासेन कृत असीत्।"

मन्ये, कालिदासस्य कथनमिदं गृहीत्वा तत्रभवता मिराशिना अनु-

---

१. वाकाटक राजवंश का इतिहास और अभिलेख पृ० ७६

मानेन पल्लवितमुपर्युक्तं निर्धारणम्। तत्र त्वेक एव आधारोऽयं यत् वैष्णवा एकादश्या, प्रबोधिन्या एकादश्या वा महात्म्यं स्वीकुर्वन्ति। यत् वाकाटकानाम् केषुचन ताम्रपटेषु उट्टंकणतिथिरूपेण द्वादश्याः त्रयोदश्याश्च तिथेरुल्लेखो वर्तते, तत्रायं निष्कर्षो गृहीतो विदुषा मिराशिना—वाकाटकसम्राट्, सम्राज्ञी वा एकादश्यां तिथौ व्रतं कृत्वा द्वादश्यां त्रयोदश्यां वा पारणावसरे ब्राह्मणाय ग्रामदानं ददौ, तदानीमेव ताम्रपत्रमुट्टङ्कितमभूत्। एतेन 'शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ' इत्यत्र शार्ङ्गपाणेरुत्थानकालविषये एकादश्या ग्रहणञ्च निश्चीयते।

एकादशीमाहात्म्येऽपि मेघदूतस्य एषा यक्षशाप-सवलिता कथा किञ्चित् परिवर्धमाना एकादशीनिर्देश-पुरस्सरं उद्धृता भवति समर्थयति च उपर्युक्तं निर्धारणम्।

किन्तु पुरातत्त्वात्मके ऐतिह्येऽस्मिन् निर्धारणे बह्व्यो विप्रतिपत्तयः समापतन्ति। तद्यथा—

१. एकादशीमाहात्म्यस्य कथा नात्र प्रमाणत्वेन समुद्धरणीया। पुराणस्थां कथां दृष्ट्वा कालिदासो मेघदूतं न रचयाञ्चकार, अपि तु मेघदूतस्थां यक्षशापकथां समवधार्य ताम् एकादशीमाहात्म्येन संयोज्य प्राक्षिप्यत सा वैष्णवैः पुराणान्तराले क्षेपकत्वेन। एवमन्यत्रापि कालिदासस्य कृतिरुपजीव्या वर्तते पुराणानाम्, यथा—पद्मपुराणे शकुन्तलाख्यानं तावदास्ते यावत्कालिदास्याभिज्ञानशकुन्तले तस्य कथावस्तु विस्तृतं भवति, न त्वस्मिन्विषये पद्मपुराणकर्ता महाभारतस्थितं शकुन्तलाख्यानमनुकरोति।

२. डाक्टर मिराशीमहोदयो वाकाटकानां यानि ताम्रपत्राणि अत्र प्रमाणत्वेन प्रस्तौति तानि प्रभावतीगुप्तासम्राज्ञ्याः तस्य पुत्रस्य सम्राजः प्रवरसेनद्वितीयस्य वर्तन्ते,[1] एतेषु उट्टंकणतिथित्वेन द्वादश्याः त्रयोद-

१. वाकाटकराजवंश का इतिहास और अभिलेख, ताम्रपट संख्या २, ३, ४, ५, ६, ८, ११।

श्याश्च निर्देशो भवति। तेषु स्थलानि कानिचिदुदाह्रियन्ते—

(क) संवत्सरे द्वितीये अश्वयुजमाघशुक्ल द्वादश्याम्।[१]

(ख) सम्वत्सरे एकादशमे कार्तिकशुक्लपक्षत्रयोदश्या।[२]

(ग) संव्वत्सरेष्टादश (शे) १० ८ ज्येष्ठामासशुक्लपक्षत्रयोदश्या (श्यां)।[३]

(घ) सव्वत्सरे एकुनविंशतिमे॥ कार्तिकमासशुक्लपक्षद्वादश्या (श्याम्)।[४]

(ङ) साव्वत्सरे त्रयोवीशे माघबहुलपक्षे द्वादश्या (म्)।[५]

अन्यत्र च अन्यासां तिथीनामपि समुल्लेखो भवति—

(च) संवत्सरे त्रयोविंशे वैशाख बहुल-पञ्चम्यां।[६]

(छ) सव्वत्सरे त्रयोवित्शतिमे वर्ष (र्षा) पक्षे चतुर्थे दिवसे दशमे।[७]

(ज) संवत्सरे पञ्चवीङ्शतिम ज्येष्ठ शुक्लदशम्याः।[८]

एतेन ज्ञायते सम्राजा न केवलं व्रतं कृत्वा पारणादिवसे द्वादश्यां त्रयोदश्यां वा ताम्रपत्रदानं प्रादीयत अपितु अन्यस्यां तिथावपि प्रादीयत एव। तर्हि कथं तेन एकमपि दानम् एकादश्यां तिथौ न दत्तम्, अन्यहि दानकर्मणि न कश्चन दोषः विधानसङ्गतमेव तद्, एषा वार्ता तु तिष्ठतु, दाननिबन्धने माहात्म्यप्रसङ्गे न कुत्रापि एकादश्या उल्लेखश्च भवति। अतो निश्चीयतेयत् तदानीं लोके न तावता श्रद्धेयाऽभवदेकादशी यावता इदानीं वर्तते। माहात्म्यदृष्ट्या तस्या नामापि लोको नाजानत्।

---

१. वाकाटक राजवंश का इतिहास और अभिलेख पृ० १५५। २. स एव, पृ० १५४। ३. स एव, पृ० १६१। ४. स एव, पृ० १७३। ५. स एव, पृ० १६०। ६. स एव, पृ० १७६ ७. स एव, पृ० १८४। ८. स एव, पृ० १६६।

अत्रेदमपि अवधार्यं भवति यद् डाक्टर वासुदेवविष्णुमिराशि-मते यदा कालिदासस्य स्थितिः वाकाटकसम्राजः प्रवरसेनद्वितीयस्य काले सम्भवति तदैव एतेषां ताम्रपत्राणामाधारेण एकादशी महात्म्यान्वेषण-प्रसङ्गः उदेति। निश्चितं च न भवति अत्रास्मिन् डाक्टरमिराशिमहोदस्यस्य विश्लेषणे, यत् कालिदास-स्थितिनिर्धारण-एकादशीमाहात्म्य-प्रख्यापनयोर्मध्ये कः साधनपक्षः कः साध्यपक्षः। पक्षद्वयेऽपि न किमपि-कर्तुं शक्नोति एकादशीमाहात्म्यम्। संशयं चावश्यमेव विचिनोति 'शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ' इत्यस्य व्याख्याने। चेत् गतानुगतिक-दृष्ट्या लोकात् तावदेकादशीमाहात्म्य-परम्परामवधृत्य तत्रभवता मिराशिना उक्तछन्दसि तद् महात्म्यमन्वेष्टुं प्रयत्यते तदा उपेक्ष्यते पुरातत्वम् ऐतिह्य आत्मा च।

३. सम्राट् द्वितीयप्रवरसेनः गुप्तसम्राजश्चन्द्रगुप्तविक्रमादित्यस्य पुत्र्याः प्रभावत्याः कनिष्ठपुत्रोऽवर्तत। गुप्तानां समकालिकः स। विष्णु-पुराणस्य रचना गुप्तानां शासने, शासनात्प्राक् निकटशताब्द्यां वाऽभवत् इति विदुषां मतम्। किन्तु तस्मिन् पुराणे न कुत्रापि एकादशीव्रतस्य तस्या माहात्म्यस्यं वा चर्चा दृश्यते। यतो वैष्णवानामेव एतत्पुराणम्। श्रीमद्भागवते महापुराणेऽपि यद्यपि एकादशीव्रतस्य चोल्लेख आस्ते तथापि विष्णोः जागरणमाहात्म्येन कार्तिकशुक्लैकादश्या उल्लेखो तत्र नास्ति। तर्हि अद्य कथमनुमीयते यत् कालिदासेन उक्ते मेघदूतच्छन्दसि एकादशीमाहात्म्याभिप्रायं गृहीत्वा कार्तिकशुक्लैकादशीमभिलक्ष्य शार्ङ्ग-पाणेः भुजगशयनादुत्थानकालो निर्दिष्टः। मन्यामहे प्रजल्पितमेतत्।

४. विष्णुपुराणे॰ वाकाटकसम्राजः प्रति पुराणकर्त्ता धार्मिकला-ञ्छनम् अभिव्यनक्ति—"तेषामपत्यं विन्ध्यशक्तिस्ततः पुरञ्जयस्तस्मा-द्रामचन्द्रस्तस्माद्धर्मवर्मा ततो वङ्गस्ततोऽभून्नन्दनस्ततस्सुनन्दी तद्भ्राता नन्दियशाश्शुक्रः प्रवीर एते वर्षशतं षड्वर्षाणि भूपतयो भविष्यन्ति।

५६। × × तैश्च विमिश्रा जनपदास्तच्छीलानुवर्तिनो राजाश्रय-शुष्मिणो म्लेच्छाश्चार्याश्च विपर्ययेण वर्तमानाः प्रजाः क्षपयिष्यन्ति।
७२। ,, [ चतुर्थोंऽशः ] वाकाटकभूपतयः परममाहेश्वरा अवर्तन्त ते वैष्णवा भूत्वा एकादशीव्रतम् उपोष्य पारणादिवसे ग्रामदानम् अददुः इति अनुमातुं न शक्यते। मन्यामहे, ताम्रपटेषु द्वादश्याः त्रयोदश्याश्च उल्लेखः तेषां वाकाटकसम्राजां शिवभक्तिमभिलक्ष्य प्रदोषव्रत प्रस्तौति।

अथवा प्रदोषव्रते द्वादश्यां त्रयोदश्यां सम्राजोऽभिषेको जातः, अतएव तां तिथिं पर्वत्वेन स्वीकृत्य तस्यामेव दान-प्रदानं पुण्याय वाकाटक-शासनैः अक्रियन। अत्र प्रमाणत्वेन उदाहरामः—मिरजापुरजनपदे पौषकृष्णपक्षस्य त्रयोदश्यां शिवालये पूजार्चनाया महत् पर्व जना आमनन्ति, नास्ति अस्य मासस्य त्रयोदश्याः कुत्रापि शास्त्रे महत्त्वख्यातिः। तत्रेदं तत्त्वम्–अत्रत्य-जनपद-नरेशानां कदाचन राज्याभिषेकतिथिः विजयतिथिर्वा इयं पौषकृष्णपक्षत्रयोदशी आसीत्।

अस्तु, तावत् किं समाधानं स्वीकुर्मो वयमत्र कालिदासोक्तौ शार्ङ्ग-पाणेः भुजगशयनादुत्थानकालस्य निर्धारणे ? मन्मते तदानीं विष्णोः वर्षामनु जागरणवेलाया या धारणा सा तिथिविशेषमनुसृत्य न प्रवर्ततेस्म, अपि तु कालावधि विशेषं,यथा—नवऋतुः, मासान्तः (पूर्णिमा) इत्यादि-कमनुसृत्य प्रचलिताऽऽसीत्, एवमनुमातुं निश्चेतुं वा शक्यते, न शक्यत एव, मन्यते इति वक्तव्यं वरं भवति। अस्ति च सूत्रम् अष्टाध्याय्याम्—

कलाप्यश्वत्थयवबुसाद्वुन् ४।३।४८

इदं सूत्रमनुसत्य सिद्धान्तकौमुद्यां प्रयोगाः साध्यन्ते यस्मिन् काले मयूराः कलापिनो भवन्ति स उपचरात् कलापी (वर्षाकालः) तत्र देयं ऋणं कलापकम्। एवं हि अश्वत्थकम्, यवबुसकम्, प्रयोगौ स्तः। एतेन ज्ञायते प्राचीन भारते ऋतुविशेषमवलम्ब्य कालावधेः निश्चयो भवतिस्म, तदेवं कालिदासस्य उक्तौ 'परिणतशरच्चद्रिकासु क्षपासु, उल्लेखमवलम्ब्य इत्थं वक्तुं पार्यते यत् शार्ङ्ग-पाणेरुत्थानकालः तदानीं शरत्पूर्णिमा आसीत्, तत्रापि आश्विनमासस्य इदानीं 'कोजागरी' नाम्ना प्रथिता

पूर्णिमा भवति, तामनु एव 'परिणतशरच्चन्द्रिकाणां क्षपाणामवसर, आयाति। अन्यच्च 'आषाढस्य प्रथमदिवसात्' विष्णोः भुजगशयनादुत्थानावधिर्यावत्' एवं स्थिते सति यक्षप्रिया 'चतुरो मासान्' यापयिष्यति।

तथा च। प्राचीन भारते मार्गशीर्ष (आग्रहायणात्) मासात् वर्षगणना प्रचलिता आसीत्। एकस्मिन् मानुषे वर्षे देवानां षट्मासात्मको दिवसः षट्मासात्मिका रात्रिश्च भवतः। ज्येष्ठात् कार्तिकमासपर्यन्तं षट्मासाः देवानां रात्रिः भवति, रात्रेः पूर्वभागं ज्येष्ठमासम् अपरभागं कार्तिकमासं च परित्यज्य चतुरो मासान् देवाः शेरते। अपरभागः कार्तिकमास एव देवानां ब्रह्मवेलात्वेन निश्चेतव्यः, तस्या आगमने एव, अर्थात् आश्विनशुक्ल-कोजागरी-पूर्णिमायां विष्णोः जागरणं युक्ततमं भवति, तमेव कालमभिलक्ष्य कालिदासेन उक्तम्—'शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ।'

कालिदासस्य पश्चाद्वर्तिन्यां शताब्द्यां तस्याः पूर्णिमायाः अवधिः उपेक्षितोऽभवत्, तत्रेदमेव कारणम् यत् कयाचित् घटनया वैष्णवसम्प्रदाये एकादश्याः प्रख्यातिः प्राचलत्, तया सह विष्णुभक्तैः जागरणस्य मान्यताऽपि प्रायुज्यत। न तु कालिदासस्य मेघदूतरचनासमयेऽपि एतादृशी मान्यता लोके स्वीकृतासीत्, गतसन्देहेन डा० मिराशिना स्वकीये इतिहासग्रन्थे यादृशमान्यताया उल्लेखः कृतः।

# आगतपत्राणि समीक्षणानि च

संस्कृत-प्रतिभा — साहित्यअकादमी
( षडमासिकपत्रम्, अंक ७—१ ) — नई दिल्ली।

संगमनी त्रैमासिकी संस्कृतपत्रिका प्रयागतः प्रचलन्ती तत्रत्यसंस्कृत-साहित्यपरिषदा प्रकाश्यते। अस्यां पत्रिकायां न केवलं प्रतिनवाः कविता-विलासाः किन्तु भूयसा विचारात्मकाः संस्कृतसाहित्ये तत्तद्विषयका लेखाश्च स्थानं भजन्ति। अमुद्रितग्रन्थाश्च मुद्रणार्थं स्वीकृताः। उर्दू-साहित्यास्वादनार्थं तत्रत्यविशिष्टकवितायाः सह परिशीलनमत्र संस्कृत-विदां पुरत उपन्यस्तं तदतीव प्रशंसार्हं उद्यमः। सुप्रसिद्धहिन्दीकवेः मुसलमानस्य खानखानस्य हिन्दुभक्तिसंम्प्रदायाभिनिवेशो विदित एव, तेन गङ्गाष्टकं नाम संस्कृतभाषया रचितं स्तोत्रमत्रेदं प्रथमतया प्रकाशितम्।

डा० जयमन्त मिश्रः — काठमाण्डू
अध्यक्षः, संस्कृत विभागः — नेपालः
त्रिभुवन विश्वविद्यालयः

संस्कृत-संगमनीयं संस्कृतकृतिनां हि संगमनाय।
सुविहित-सुमति-सुयत्ना धृत-बहुरत्ना भवेन्नूनम्॥

संस्कृत-भाषा-गरिमा महिमा चान्तर्निहितविषयाणाम् ।
प्राप्नव्यो जनतायां जन-तापत्रय-विनशनाय ।।
एवंकृतसङ्कल्पा स्वल्पाकारापि चाल्पसाधना नित्यम् ।
सङ्गमपूत-प्रयागात् प्रज्ञादीप्तिं प्रकाशयेन्नूनम् ।।

डा० आद्याप्रसाद मिश्रः प्रयागः ।
अध्यक्षः, संस्कृत विभागः
प्रयाग विश्वविद्यालयः

प्रयागीयसंस्कृतसाहित्यपरिषदः संगमनीनामिकया संस्कृतत्रैमासिक्या संस्कृतस्य स्वकीयया निःस्वार्थसेवया स्वीया सत्ता सततं सार्था क्रियते । संस्कृतभाषायास्तद्वाङ्मयस्य च प्रचाराय प्रसाराय चानया क्रियमाणः प्रयत्नः सर्वथा स्तुत्यः श्लाघ्यश्च । स्वदेशस्य सर्वाभिः शिक्षासंस्थाभिः सर्वथा स्वीक्रियमाणेयं पत्रिका महते कल्याणाय कल्पिष्यत इति बलीयान् विश्वासोऽस्मदीयः ।

स्वामी रामेश्वर पुरी संन्यासाश्रमः
वेदान्त-व्याकरणायुर्वेदाचार्यः एलिसब्रिज
आर० ए० पी०, न्यायशास्त्री अहमदाबाद ।
१३-८-६७

स्वस्ति श्रीमत्सु प्रभातशास्त्रिमिश्रमहानुभावेषु समुल्लसन्तु मे नारायणस्मरणासिका आशिषां राशयः ।

प्रयागात्सङ्गमात्तीर्थान्निःसृता ब्रह्मवाङ्मयी ।
पत्रिका संगमन्येषाऽन्वर्थसंज्ञा विराजते ।।

गङ्गायमुनासरस्वतीसङ्गमादाविर्भूतां प्रभातप्रभाप्रभावाञ्चितां तारिणीश-जयशङ्करप्रोत्साहसंवर्द्धितां सस्कृतवाङ्मयमिहिरकिरणनिकरविता-

नेन सपद्येव जनतातापपापकलाया आपादकाज्ञानतिमिराणां समूलमुन्मूलनीमिमां संगमनीं त्रैमासिकपत्रिकां लोकं लोकं मामकीनं मानसं घनागमदर्शनान्मयूर इव नृत्यतितराम्। सरलसुसंस्कृतगद्यपद्यमयानेकविधविषयभाषाविभूषितकलेवरेयं मन्दमतीनामपि मनांसि नितान्तमानन्दयति।

अस्याः सर्वे एव निबन्धाः सुरुचिराः सुमधुरा मनोहराश्च दृश्यन्ते। मन्ये नूनमेवेयं सुरभारत्याः प्रचाराय प्रसाराय च बद्धपरिकरा सपदि सफलतामासादयेत्। सम्पादकमहाशया अपि सम्पादनेनास्याः संस्कृतसाहित्यस्यानुपलं सेवां विधातुं चिरायुषो भवन्तु वर्द्धताञ्चेयं लोकोपकाराय, सङ्गमयतु च जनमनांसि सन्ततं संस्कृतसेवायामित्याशीर्वचांसि वितीर्य विरमामः।

## वैफल्यं कृपणस्य

पङ्गोर्दृष्टिरिवोपभोगरहिता नाऽऽदातुमर्थं क्षमा
भार्येव स्थविरस्य लोचनचमत्कारैकसारात्मिका।
श्रद्धालेशविवर्जिता विरचिता पूजेव विश्वात्मनः
वैफल्यं कृपणस्य हन्त ! भजते सम्पत्तिराशिः सदा।

—प्रभात मिश्रः

# आस्माकीनम्

## लज्जास्पदम्

ऐषमः (१९६७) सितम्बरमासस्य सप्तमे दिवसे लखनऊस्थाखिल-भारतीयसंस्कृतसाहित्यपरिषदा 'गोपीनाथ कविराजअभिनन्दनग्रन्थ' नामकं पुस्तकं प्रकाश्य कविराजमहोदयस्यार्चनायां समर्पितम्। संस्कृत-जगतो मूर्धन्याचार्यस्य चिन्तकप्रवरस्य पूज्यकविराजस्य समर्चनेयं भार-तीय-ऋषिपरम्पराया अभिवादनं वक्तुं शक्यते। परमित्थं प्रतीयते यत् लखनऊ-स्थया तया संस्कृतसाहित्यपरिषदा कविराजमहो-दयस्यार्चनाया आवरणे आत्मन एव प्रच्छन्नार्चना विहिता। उक्तग्रन्थस्य भूमिकायाः पङ्क्तिद्वयं द्रष्टव्यमस्ति—'वित्तीय सहायता से इस अभिनन्दन ग्रन्थ के प्रकाशन में उल्लेखनीय सुविधा हुई है।' 'विश्वास है यह ग्रंथ पूज्य कविराज की स्मृति को अनन्तकाल तक कायम रखेगा।'

अत्रध्यानं देयम्—अभिनन्दनग्रन्थस्य प्रकाशने वित्तीयसहायता प्राप्ता, ग्रन्थश्चायं पूज्यकविराजस्य स्मृतिमनन्तकालं यावत् प्रतिष्ठितां कर्तुं शक्नोति, किन्तु ग्रन्थस्य मूल्यमस्ति १०० रूप्यकाणि। अस्य च पृष्ठ-संख्या वर्तते—६६०। निष्कर्षोऽयं भाति यत् पूज्यकविराजस्याभिनन्दन-ग्रन्थं प्रकाश्य लखनऊस्थया संस्कृतसाहित्यपरिषदा प्रच्छन्नो व्यापारः कृतोऽस्ति, यश्च प्रकटरूपेण ऋषिकल्पकविराजस्याभिनन्दनमास्ते, परं तत्त्वतः शतैकरूप्यकमूल्यवत् पुस्तकं कविराजस्य नाम्नः प्रभावेण नैकेषु

पुस्तकालयेषु केन्द्र-राज्यशासनीयविभागेषु च क्रापयित्वा द्रव्योपार्जनस्य पवित्रमुत्तमञ्च साधनं विद्यते । संस्कृतानुरागिणां हस्ते तु पुस्तकमिदं तदैव गन्तुमर्हेत् यदाऽस्य मूल्यं व्ययमात्रपरिमितं स्यात् । संस्कृताध्येतॄणां कृते पूज्यकविराजस्य प्रतिभाया यः परिचयोऽस्माद् ग्रन्थादुपलब्धव्य आसीत्तस्य तु कल्पनैव न कार्या । ग्रन्थस्त्वयं वस्तुतो भारतशासनेन क्रयार्थम् आंगलभाषाभाषिविदेशीयराष्ट्राणां पुस्तकालयेषु विक्रयार्थं च वर्तते ।

अमुमेव दृष्टिकोणमभिरक्ष्य परिषदो मन्त्रिणाऽस्य ग्रन्थस्य त्रिचतुर्थभागा आंगलभाषायां प्रकाशिताः । ग्रन्थेऽस्मिन् ६२ लेखाः सन्ति । येषु ६० लेखा आंगलभाषायां, संस्कृते केवलं ५ लेखाः, इतरे हिन्दीभाषायां सन्ति । कविराजमहोदयः तान्त्रिकविद्याविद् विख्यातोऽस्ति । किन्तु तन्त्रविषयमवलम्ब्य कोऽपि समग्रो लेखो नोपलभ्यतेऽत्र ग्रन्थे वस्तुतः संस्कृतविदुषां कृते एतादृशोऽभिनन्दनग्रन्थो विडम्बनामात्रं, यत्र द्विनवतिलेखेषु षष्टि लेखाः केवलाङ्गलभाषायां भवेयुः चेत् आंगलभाषायां लेखा न वर्तेरन् तर्हि परिषदो मन्त्री ग्रन्थममुं साफल्येन अंग्रेजी-क्षेत्रेषु विक्रेतुं कथं शक्नुयात् ।

अस्माकं दृष्टौ संस्कृतजगति 'अभिनन्दन-मार्का' अयं प्रकाशनव्यापारोऽतीवलज्जावहो वर्तते, तथा चाभिनन्दितानाम् ऋषिकल्पविदुषां विडम्बनां च विधत्ते ।

## दिवङ्गतो महामहोपाध्याय उमेशमिश्रः

संस्कृतजगतो मूर्धन्यमनीषी महामहोपाध्याय उमेश मिश्रो गतः भाद्रपदे मासि दिवङ्गतो जातः । स हि भारतीयदर्शनस्य प्रख्यातो विद्वान् आचार्यः एवं प्राच्यविद्याविद् आसीत् । पुरा तेन प्रयागविश्वविद्यालयस्य संस्कृतविभागे व्याख्यातृपदं व्यभूष्यत पश्चात् दरभंगा-संस्कृतविश्वविद्यालयस्योपकुलपतिपदमलङ्कृत्य संस्कृतजगतः सेवा व्यधायि । ततोऽप्य-

काशग्रहणानन्तरं प्रयागस्थ-सरगङ्गानाथझा-अनुसन्धानसंस्थानस्य सञ्चालकपदं स्वीकृत्य जीवनपर्यन्तं विद्याव्यसनेऽन्वरज्यत ।

महामहोपाध्यायस्याभिजनो मिथिलाऽऽसीत्, पिता च स्वनामधन्यो महामहोपाध्यायो जयदेवमिश्रः । 'आकरे पद्मरागाणां जन्म काचमणेः कुतः' इति सूक्तिमक्षरशः चरितार्थयन् डा० उमेशमिश्रः संस्कृतभाषायां हिन्द्यां मैथिल्यामाङ्गलभाषायामप्यनेकान् ग्रन्थान् प्राणयत् ।

मिश्रमहोदयस्य निधनेन संस्कृतजगतोऽपूरणीया क्षतिरभवत् । संगमनी-परिवारस्तत्सद्गत्यर्थमीश्वरान् प्रार्थयते ।

## आयुर्वेदपञ्चाननः पण्डित जगन्नाथप्रसाद शुक्लः

आयुर्वेदवेत्ता साहित्यवाचस्पतिः स्वनामधन्यो जगन्नाथप्रसाद शुक्लः आग्रहायणे नवाशीतिवयसि इमं लोकमजहत् । शुक्लमहोदयानां च हिन्दी-प्रचार-कार्ये, आयुर्वेदस्योद्धारे च महती सेवा वर्तते । तस्मै उदारमनसे मनीषिणे वैकुण्ठप्राप्त्यर्थं विष्णुं प्रार्थयामः प्रयागनागरिकैः तस्य स्मृतौ पण्डित जगन्नाथप्रसाद शुक्ल-आयुर्वेदविश्वविद्यालयस्य स्थापनाया निश्चयो कृतः, एतन्निश्चयं प्रशंसामः तस्य साफल्यं च कामयामहे ।

## श्रद्धाञ्जलिः

विगतमासेषु संस्कृतजगतो महती हानिर्जाता । वाराणसेय-संस्कृत-विश्वविद्यालयस्य प्राध्यापको व्याकरणसाहित्ययोरग्रणीर्विद्वान् पण्डित भूपनारायणझाः तथा मीमांसादर्शनस्य प्रकाण्डमनीषी पण्डितरामचन्द्रपनङ्को नश्रथअस्माकं मध्ये पाञ्चभौतिकशरीरेण स्तः । तयोः प्रतिभाया वैदुष्याच्च संस्कृताध्येतारोयं दिशा-निर्देशं प्राप्नुवन्ति स्म तस्य पूर्तिर्निकटभविष्ये न सम्भवा । दिवङ्गतात्मानौ प्रति वयं श्रद्धानताः प्रार्थयामहे चेश्वरान् ताभ्यां सद्गतिं दद्युरिति ।

## अभिनन्दनम्

प्रयाग-विश्वविद्यालयस्य नियुक्तिसमित्या संस्कृत-विभागाध्यक्षपदे डा० आद्याप्रसादमिश्रमहोदयः प्रतिष्ठितः संजातः, संगमनीपरिवारः तमभिनन्दयति, वर्धापनं च ज्ञापयति । आशास्ते च मिश्रमहोदयः संस्कृतविभागस्य परम्परां गरिमाणञ्च स्वप्रतिभयाऽधिकाधिकं चमत्करिष्यति ।

हितोपदेशातिक्रान्तस्मरणादौ च तद्गुणः ।

हितोपदेशे यथा—

अस्मद्वक्षसिजद्वयात्किमु सुखं स्वदन्ति[१] कुम्भद्वयम्,
पीयूषं किमु सारमस्मदधरादस्मादवस्मारितम् ।
कोऽयं वो जनितेति साहसरसान् श्रीवीरसिङ्गप्रभो !
संरम्भादपसारयत्यरिनृपान् प्रौढा प्रतीतोक्तिभिः[२] ॥२४

अत्र मारणसूचनाऽभिप्रायेण परुषत्वेऽपि मरणपर्यवसायी, बलवता नायकेन विरोधः परिहरणीयः इति हितोपदेशपरत्वाद् गुणत्वम् ।

अतिक्रान्तस्मरणे यथा—

यन्मुक्तोऽयमजिह्निका[३] प्रियसखा[४] त्वत्खड्गधारामुखा-
द्यो दृष्टो न च तैः किरातहतकैर्दुर्गापहारोद्यतैः ।
तत्त्वन्मङ्गल[५] सूत्रवैभवमिति प्रस्तौति सिङ्गप्रभो !
धाटीसंभ्रमनष्ट[६] दृष्टपतिकां चैकां[७] स्त्रियं बन्धुता ॥२५

अत्र प्रथमार्धे परुषत्वेऽपि संभावितातिक्रान्तानुवादमात्रपरत्वाद्-गुणत्वम् ।

विरसं[८] विरसार्थं स्यादनौचित्यमलङ्कृतः ॥११॥

यथा—

श्रुत्वा सिङ्गक्षितिपतिरणारम्भगम्भीरघोषान्,
शुष्यत्तालुप्रतिनृपतय[९] स्तब्धजङ्घं पतन्तः ।

१. स्पर्धन्धि ख०, (स्वद् धातुः आस्वादनेऽर्थेऽस्ति) । २. प्रतिताक्तिभिः क० । ३. अजिह्निका क० । ४. अत्र 'प्रियसखः' इति पाठो व्याकरणसम्मतो भवेत् । ५. तन्मङ्गलसूत्रत्व, क० । ६. दुष्ट क० । ७. एको, क० । ८. वीरवीर सार्थस्य, क० । ९. प्रतिनृपतयः, इत्युचितम् ।

सम्मोह्यन्ते[1] श्रुतिषु मरुतां शैलकान्तारदेशे
निर्यान्तीषु[2] श्रुतिपुटसुखं वेणवीभ्यो वपाभ्यः[3] ॥२६

अत्र धाटी[4] भयेन पलायमानानां मनसः कीचकरन्ध्रसमीरणश्रवण-सुखानुसन्धानमनुचितमिति विरसत्वम्[5]।

अप्रधानस्य विज्ञेयो गुणीभावोऽस्य कोविदैः।

यथा –

कस्तूर्या तत्कपोलद्वयभुवि मकरी निर्मितौ[6] प्रस्तुतायाम्,
निर्मित्सूनां स्ववक्षस्यतिपरिचयात्त्वत्प्रशस्तिरुपांशु।
वीरश्रीसिङ्गभूप! त्वदहितहितकुभुजां राज्यलक्ष्मीसपत्नी-[7],
मानव्याजेन लज्जां सपदि विदधते स्वावरोधाः प्रगल्भाः ॥२७

नाऽत्र प्रतिनायक[8]विरुद[9] विलेखननिमित्तया जनिता, स्वावरोध[10] सान्निध्यादिभिरुद्दीपिता,[11] लज्जानुमितैर्निर्वेददैन्यविषादहर्षादिभिरभिव्यक्ता[12], निर्वेददैन्यविषादादिभिरुपचिता, तदनु[13] तदनुमितैरेव मानसिककुत्सादिभिरभिव्यक्ता, निजनितजुगुप्सा[14] च स्वावरोध-विषया, [15]तत्प्रागल्भ्यादिभिरुद्दीपिता, मकरैकातपत्र[16] निर्माणादिभि-रभिव्यक्ता,[17] तदनुमितैर्हर्षादिभिरुपचिता, रतिश्च[18] निर्भरमेकत्र सन्नि-वेशिता (इत्यनौचित्येन विरसत्वैरपि तयोर्नायकविरुदविलेखन)[19]

---

१. समाध्यन्ते ख०। २. निर्यान्तिषु क०। ३. त्पपाभ्यः क०। बपाभ्यः-छिद्रेभ्यः। ४. धाटिभयेन क०। ५. वीरसत्वम् क०। ६. निर्मिता प्रस्तुतायाम् क०। ७. सपत्नि क०। ८. प्रीतिनायकशतानायक क०। ९. विरुदं ख०। १० स्पदराध क०। ११. उद्दीपित ख०। १२. अभिव्यक्ती ख०। १३. क पुस्तके तदनु इति नास्ति। १४. निजजीवित क०। १५. प्रगल्भ्यादिभिः क०। १६. खपुस्तकेऽपि मकरे द्वे वरीवर्त्ति। अर्थदृष्ट्या तु मकरिकापत्र इति प्रयोगः समीचीनो भाति। १७. अभिव्यक्तौ ख०। १८. रचिश्च ख०। १९. ( ) एतच्चिह्नान्तर्गतांशः क पुस्तके न नयनगोचरो भवति।

हेतुतया नायककृपाकटाक्षप्रसादसंपन्नतया[1] च न संभाव्यमानयोः शरणागतरक्षण[2]लक्षणनायकगतपरोपकारत्वेनाऽप्राधान्याद् दुष्टत्वम् ।

प्रक्रान्तभंग्यनिर्वाहे[3] भिन्नमाहुर्मनीषिणः ॥१२॥

यथा—

गाडी[4] पानमदालसाः परिगलद्धमिल्लमल्लीस्रजः,
सव्याजस्खलितोक्तयो मदवतीसीमन्तरत्नस्त्रियः ।
का[5] तारुण्योदधिकरा यदि[6] स्मरकला[7] रसाम्राज्यसिद्धिक्रिया,
श्रीसिङ्गक्षितिपाल ! तावकगुणान् गायन्ति गौडाङ्गनाः ॥२८

अत्र मत्तजात्युपक्रमस्य मदवतीत्यादिगुणवर्णनेन अनिर्वाहाद्भिन्नत्वम् ।

अस्याऽपि गुणता क्वाऽपि यदि[8]च्छाया न हीयते[9] ।

यथा—

"ग्रीष्मो निश्वसितेषु लोचनयुगे वर्षाश्शरद्गण्डयोः",

इति पूर्वोदाहृतेषु ऋतुष्वेकवचनप्रक्रमस्य वर्षा इति बहुवचनोपादानाद् भिन्नत्वेऽपि भूम्न्येव वर्षा इत्यनुशासनबहुवचनश्रुतेरप्यर्थै[10]कस्यात्याज्यत्वादेकवचनछाया[11] न हीयते इति गुणत्वम् ।

यदश्रद्धेयमित्युक्तमतिमात्रं तदुच्यते ॥१३॥

---

१. प्रसादनतन्नतया ख० । २. लक्षण ख० । ३. भङ्ग्यानि निर्वाहो ख० । ४. क ख पुस्तके क्रमशः गाडी गौरी च पाठौ दृश्येते । असङ्गतिसंवलितं पाठद्वयमपि । प्रसङ्गपर्यालोचनसमागत अर्थदृष्ट्या तु गौडी इति पाठः समीचीनः । गुडेन निर्मिता सुरा गौडी । तदुक्तं मनुना—"गौडी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा" ।—मनुस्मृतिः ११।९५। ५. कान्त ख० अस्पष्टार्थः वृत्तभङ्गविभूषितश्च । ६. यरि क० । ७. स्मरकला ख० । ८. भया क० । ९. सिहीयते ख० । १०. अवध्येकस्स क० । ११. वचनच्छाया इत्युचितम् ।

यथा—

श्रीसिङ्गभूपाल ! तवाऽहितानां, निश्वासवेगा[१] गिरिकाननानि ।
कुर्वन्ति निर्दग्धनिकुञ्जपुञ्जं, पर्यस्तगण्डोपलमण्डलानि ॥२६

अत्र पराभवभारादत्युष्णानामतिबहुलानामपि रिपुनृपालनिश्वासवेगानामाभोगे तथाविधदाहकक्षेपकत्वयोरश्रद्धेयत्व[२] मित्यतिमात्रत्वम् ।

अस्याऽपि गुणताङ्केचिद् यथापूर्वं समर्थने ।
वदन्त्यन्ये तु सरसा लोकस्थित्य[३]नुरोधतः ॥१४॥

आद्यं यथा—

श्रीसिङ्गक्षितिपाल ! तावकचमूधाटीषु वाजिच्छटा[४]-
रिंखोद्धूतरजोभिरम्बुनिधयो विश्वेऽपिगाधीकृताः[५] ॥
चञ्चत्केतुपटान्त वान्त[६]पवनैर्भूयोऽप्य[७]गाधीकृता,
भद्रेभेन्द्रमदाम्बुना पुनरमी[८] पूर्वाधिकम्पूरिताः ॥३०

अत्र सेनावाजिरजसा समुद्राणां शोषको[९] स्थलीकरणादेरतिमात्रत्वेऽपि पुनरपि वारिपूरकल्पनया वस्तुस्थितेरविरोधाद् गाढमार्गानुवर्तिनां विदग्धानां मते[१०] गुणत्वम् ।

द्वितीयं यथा—

यत्रायं[११] कुलदेवतासु किमुतोद्वाहक्रमो भूभुजा-
माचारानु सखीति वा प्रतिपदं वध्वा विवाहोत्सवे ।
धाटी[१२] संश्रवणात् पलायनवतां श्रीसिङ्गभूपद्विषां,
राज्ञां गर्व[१३] निकृन्तने पटुतरा तन्मण्डलाग्रादपि ॥३१

---

१. निश्वासवेग क० । २. अश्रद्धेयत्यर्षं, क० । ३. स्थित्या, ख० । ४, वाजिछटा क० । ५. गाधिकृता क० । ६. वात क । ७. अगाधिकृता क० । ८. प्रसरमी क० । ९. पोषकः ख० । १०. ख पुस्तके "मते" इति न दृश्यते । ११. यात्रायं क०; यत्रेयं ख०; औचित्यसंवलितः पाठस्तु यात्रायाम् इति । १२. भटी क० । १३ क० ख० पुस्तके च मर्वा मौर्व इति । गर्वं इति समुचितः ।

अत्र वाचां खड्गादपि हृदयमर्मभेददलनादतिमात्रत्वेऽपि तादृशाव-नवे तादृशानां तादृशानि वचनानि वज्रादपि हृदयमर्माणि भिन्दन्तिकिमु तखड्गादिति लोकस्थितेरनुवर्त्तनाद्विदर्भमार्गानुसारिणा दाक्षिणात्या-नामतिगुणत्वम् ।

नातिस्फुट[1] चमत्कारमनुज्ज्वलमितीरितम् ।

यथा—

क्रोधा[2]: खनन्ति विपिने भक्षयन्ति मृगान् कुशान् ।
निद्रान्ति पादपच्छाये कल्याणनृपविद्विषः ।।३२

अत्र विद्विषां नगरेषु भयव्याकुलतया कदाचिदपि निद्रा चक्षु: नोपैति भ्रष्टराज्यास्तु कान्तारे वन्यजन्तुवत्[3] (विस्रब्धाः) निद्रान्तीति[4] विव-क्षितस्याऽपि चमत्कारस्याऽतिक्लेशेन प्रतीतेरस्फुटालङ्कारत्वाच्च अनुज्ज्व-लत्वम् ।

विदग्धहृदया. क्वाऽपि तस्याऽपि गुणतां विदुः ।।१५।।

यथा—

"सर्वे ग्रहास्सनक्षत्रा" इत्यादि पूर्वोदाहृतम् ।

अत्र जाड्याद्यर्थालङ्कारवि[5]रहेणानुज्ज्वलत्वेऽपि शुद्धश्रोत्रिया-शीर्वादानुकरणत्वाद् गुणत्वम् ।

स्पष्टनीचोपमानादित्रयं नाम्नैव[6] लक्षितम् ।

नीचाधिकोपमाने यथा—

श्रीसिङ्गभूप[7] भवदीयकृपाणरेखा-
मालोक्यपवित्रमकुशाग्रनिशातधाराम् ।

---

१. नातिस्फट क०। २. अर्थदृष्ट्या कोलाः इत्युचितम् । ३. क पुस्तके एतावानंशः अपठनीयः । ४. निद्राति ख० । ५. विरहेनुज्वलत्वे क०। ६. नाम्नैव क० । ७. श्रीसिङ्गक्षितिभूप ख ।

लीनाः प्रविश्य विपिनप्रदरान्तराणं
नारायणोदरदरीमिव वैरिभूपाः[1] ॥३३

अत्र खड्गधारां प्रति कुशधाराया अतिनिशातत्वे नीचत्वादनिमात्रत्वं नीचापमानत्वं विपिनप्रदरं प्रति वैपुल्येन नारायणोदरस्याधिक्यादधिकोपमानत्वम् ।

असदृक्षोपमानत्वं यथा—

(त्मण्डलीकृतकोदण्डो रणे कल्याणभूपतिः ।
करकम्पितकल्याणो मीनाङ्क इव राजते ॥३४

अत्र कोदण्डसौगन्धिकयोः [2]साम्याभावादसदृक्षोपमानत्वम्[3] ।)

आद्ययोस्तु गुणीभावः कदाऽपि कविकौशलात् ॥१६॥

यथा—

परिपन्थिनि सिङ्गनृपो[4] धनकणिकाङ्कनकगिरिवदादत्ते ।
पात्रे तिष्ठति पुरतः तृणकणवत्त्यजति कनकानि ॥३५

अत्र कनकगिरितृणकणयोरत्यधिकनीचयोरुपमानत्वेऽपि नायकस्यार्थ[5]धर्मार्जनाप्रमादावतिशय[6] विवक्षायान्न[7] दुष्यतः ।

असदृक्षोपमानस्य व्यतिरेकोपमादिषु ।

यथा—

अविवेकिनसुरमिव[8] च्चिन्तामणिरिव न याति काठिन्यं ।
श्रीसिङ्गभूपः तिलकः शिव शिव भूलोकभाग्यसौभाग्यम्[9] ॥३६

अत्रोपमानोपमेययोर्वैधर्म्येऽपि व्यतिरेकोपमानत्वाद् गुणत्वम् ।

अप्रसिद्धोपमानन्तु भवेदप्रथितोपमम् ॥१७॥

---

१. गौरिभूपाः ख० । २. साम्य'''वावाद सक्षपमा- नत्व मिति क०, तत्र खण्डितत्वादस्पष्टार्थः । साम्याभावादसदृक्षोपमानत्वमिति प्रतीयते । ३. (''')अंशोऽयम् ख पुस्तके न दृश्यते । ४. सिङ्गभूत्यो ख० । ५. अर्थधर्मार्जन प्रमाद ख० । ६. वदति क० । ७. समा इति ख० पुस्तके वरीवर्ति; तदनुपयुक्तम् । ८. सुरभवद् ख० । ९. सौभाग्यम् क०।

यथा—

हन्त सौगन्धिकाकारो स्फुटकोक[1] नदाङ्ग्रयः ।
श्रीसिङ्गभूपधाटीभिः [2]जर्भरा धूर्जरस्त्रियः ॥३७

अत्र सौगन्धिककोकनदयोः कान्ताकरचरणोपमानत्वेन कविप्रयोगेषु न प्रसिद्धिरिति दुष्टत्वम् ।

अस्याऽपि गुणता क्वा[3]ऽपि तरङ्गितचमत्कृतेः ।

यथा —

श्रीसिगभूपाल ! भवत्प्रयुक्त[4] नाराचपङ्क्त्या परितः पतन्त्या ।
अराजि[5] वीराहितराजकण्ठे[6] सुराङ्गनासवरणस्रजेव ॥३८

अत्र नाराचपङ्क्तिस्वयंवरणस्रजोरुपमेयोपमानभावाप्रसिद्धावपि सुरांगना[7] संभोगहेतुत्वसाम्यात् चमत्कारातिशय इति गुणत्वम् ।

अश्लीलं तद्विनिर्दिष्टं यदश्लीलप्रतीतिकृत् ॥१८॥

यथा

उद्दीपिताः प्रहारेण[8] भूपाल ! तव शात्रवाः ।
रन्ध्रे प्रहर्तुमौद्धत्या[9]दुन्नमन्ति नमन्ति च ॥३९

अत्र प्रहरोद्दीपनरन्ध्रप्रहाराय नमनोन्नमने च शिश्नेऽपि विद्येते[10] इति प्रतीतेरश्लीलत्वम् ।

अस्याऽपि गुणता ज्ञेया कवीन्द्रस्वीकृतादिषु ।

यथा —

जित्वा तत्परिरम्भण[11] प्रकृतिकं ब्रूते सखीनां पुरः ।
[12]शार्यारोपणसूचिते पणविधौ श्रीसिंगभूमीभुजः[13] ।

---

१. क० ख० पुस्तकस्थः स्फट कोक इति पाठस्तु अशुद्धः । स्फुट इत्युचितः । २. लिपिकारेण जर्जरा गुर्जरस्त्रियः स्थाने प्रमादात् जर्भरा धूर्जर स्त्रियः लिखितः इति प्रतीयते । ३. गुणताश्चापि क० । ४. युक्ता क० । ५. अ राज क० । ६. वीराहित कराजकण्ठे ख । ७. सुराङ्गनां भागे ख० । ८. प्रहरेण क० । ९. औन्नत्याद् ख० । १०. विद्यते क० । ११. प्रसृतिकं ख० । १२. शाठ्या क० । १३. भूमीभुजा क० ।

मन्दस्मेरकपोलकान्तिलहरीसङ्क्रान्तवक्त्रेक्षणा
सा स्विन्नांगुलि[1] शारिका परिकरं सज्जीकरोति प्रिया ॥४०

अत्र शारिकस्त्र परि[2]शारिकारोपणं जृम्भाकेलिरूपस्याश्लीलस्य प्रतीतेरश्लीलत्वेऽपि कविभिरेवंविधस्याश्लीलस्याङ्गीकाराद् गुणत्वम् । कुत्र कविभिरेवमुररीकृतमिति चेत्तदा साधु सर्वतो निदर्शयामः । तथा हि—

तदाननं मृत्सुरभि क्षितीश्वरो रहस्युपाघ्राय न तृप्तिमाययौ ।
करीव[3] सिक्तं पृषतैः पयोमुचां शुचिव्यपाये वनराजिपल्वलम् ॥४१

इति[4] रघुवंशे ।

क्लिष्टचन्द्रमदयैः कचग्रहैरत्यदाहितनखं समत्सरम् ।
तस्य तच्छिथिलमेखला[5] गुणं पार्वतीरतमभूदतृप्तये ॥४२

इति[6] कुमारसम्भवे ।

मुखप्रदानै[7]रविलम्बपूर्वैः कण्ठग्रहैः क्षिप्रनिपीडिताङ्गैः ।
करप्रचारैरशिथिलोपरोधैः लब्धैःप्रियाया मुमुदे मुकुन्दः ॥४३

इति कंदर्पसंभवे ।

ह्रीतया गलितनीविनिरस्यन्नुत्तरीयमवलम्बितकाञ्चि ।
मण्डलीकृतपृथुस्तनभारं सस्वजे दयितया हृदयेशः ॥ ४४

इति[8] भारविकाव्ये ।

---

१. स्विन्नागुली क० । २. 'शारिकोपरि' इति पाठस्तूचितः । ३. क पुस्तके श्लोकस्य तृतीयचतुर्थपादौ न वर्तेते । ४. तृतीयसर्गस्य तार्तीयकश्लोकः । ५. शितिल क० । ६. अष्टमसर्गस्य ८३ त्र्यशीतिसंख्यकः श्लोकः । अस्य श्लोकस्य संप्रति प्रचलितपाठस्तु--

क्लिष्टकेशमवलुप्तचन्दनं, व्यत्ययार्पितनखं समत्सरम् ।
तस्य तच्छिदुरमेखलागुणं, पार्वतीरतमभूद्म तृप्तये ॥ इति ।

७. प्रध्वानैः क० । ८. नवमसर्गस्य ४८ अष्टचत्वारिंशः श्लोकः ।

आधुनन्ति नवलीटकगग्रे नीविमर्दमुकुलीकृतदृष्ट्या ।
रक्तवणिकहताऽधरतन्त्रीमण्डलं क्वणितचारु चुकूजे ॥४५

इति[1] माघकाव्ये ।

एवमन्यत्राऽपि विज्ञेयम् ।

देशकालकलालोकन्यायागम[2] विरोधि यत् ॥१९॥
साहित्यप्राणसारज्ञैः तद्विरुद्धमितीरितम् ।
तत्र देशो हि राष्ट्रादिः कालो नक्तन्दिवर्तवः ॥२०॥
गीतिनीतिप्रभृतयः[3] कलाः कामार्थसंश्रयाः ।
चराचराणाम्भूतानाम्प्रवृत्तिर्लोक उच्यते ॥२१॥
न्यायस्तु हेतुविद्या स्यादागमो धर्मसंहिताः ।

देशादिविरुद्धानि यथा—

राधे मासि दिवानिशम्मृगमदव्यालेपिनो[4] मालती-
शय्यायां यमुनातरङ्गपवनस्पर्शोत्सुकैर्वत्सलैः[5] ।
धात्रीनायकसेवनाय मिलिता भूमीश्वरा मानिनो,
राजा[6] द्योम्मणिहारसौरभमयैः क्रीडन्ति बन्दीजनैः ॥४६

अत्र आन्ध्रदेशे यमुनेति देशविरोधः। राधे मासि मालती शय्येति कालविरोधः। हाराणां सौरभमिति लोकविरोधः। एते प्रत्यक्ष-विरोधाः। मानिनः सेवा मिलिता इति स्ववचनविरोधः, बन्दिजनाः वत्सला इति औचित्यविरोधः, अस्य[7] सेवकानामहर्निशं क्रीडेति युक्तिविरोधः। एते अनुमानविरोधाः बन्दीकृतैः परपरिग्रहैः क्रीडन्तीति धर्मसंहिताविरोधः, बन्दीकृत्यासक्तेः[8] व्यसनं अपकृतस्त्रीषु

१. दशमसर्गस्य चतुष्षष्टितमः श्लोकः। ख, पुस्तके नास्ति श्लोकोऽयम्
२. न्यागम ख० । ३. प्रभृतयाः क० । ४. दिवानिशम्य ख० । दिवानिश इति क०, उचितस्तु दिवानिशमिति । ५. स्पर्शात् ख० । ६. चिन्त्यमिदम्, 'राजद्योमणि' इति अनुमानेन प्रतीयते। ७. अम्य क० । ८. बन्दीऽवत्यासक्ये ध्यंसनं, क० ।

विश्वासश्चेत्यर्थागमविरोधः ग्रीष्मे दिवानिशक्रीडा[1] पश्चा[2] द्वर्षनिदाघयोरित्यायुर्वेदविरोधः (ग्रीष्मे कस्तूरिकादिलेपनं भोगशास्त्रविरोधः[3]) अत्रागमान्तर्भूतानामपि कलाशास्त्राणां पृथगभिधानं तद्ज्ञानस्य साहित्ये प्राधान्य- ज्ञापनार्थं महोत्पातानुभावादि[4] विवक्षायामिदं गुणः ।

उत्पातविवक्षायां यथा—

उद्दण्डप्रतिगण्डभैरवविभो स्मेरे कटाक्षे रुषा
जाते कोकनदच्छद[5] प्रतिभटे राष्ट्रेषु विद्वेषिणाम्[6] ।
माकन्दाः शरदि[7] प्रभूतकलिकाः पद्मं[8] कुकूलोदरे
पाषाणाः प्रहसन्ति[9] हन्त दधते सन्ध्यासु निद्रां द्विजाः ॥४७

अत्र शरदि माकन्दप्रसूनानीति कालविरोधः, कुकूलोदरे पद्ममिति युक्तिविरोधः पाषाणाः प्रहसन्तीति[10] लोकविरोधः, ब्राह्मणानां सन्ध्यासु निद्रेति धर्मसंहिताविरोधः । तदेषां दुष्टत्वेऽपि नायककोप॰निष्पमाणपरराष्ट्रविपत्तिसूचकदुर्निमित्तविवक्षया गुणत्वम् ।

अनुभावविवक्षायां यथा—

कस्तूरीमृगयूथसेविततलैः कर्पूरपालिद्रुमै[11]-
रारामानभिरामता[12] मुपगतानालोक्य राजाऽचले ।
विस्मेरा हृदि पञ्चवर्णकशुकादाकर्ण्य कर्णोत्सवं
श्रीसिङ्गक्षितिपालविक्रमकलां नन्दन्त्य[13] पूर्वे जनाः ॥४८

---

१. क्रीडानं क० । २. ख पुस्तके प इत्यक्षरं नास्ति । क्षा इति वर्तते । तेनं अनुमीमहे अत्र 'पक्षाद्' इत्युचितः । ३. ( ) ख पुस्तके कोष्ठान्तर्गतांशो नास्ति । ४. महेत्वाता क० । ५. कोक न दे ख० । ६. विद्वेषिणः क० । ७. शरधि क० । ८. तुषमध्ये इति भावः । ९. प्रसहन्ति क० । १०. प्रसहन्ति, क० । ११. पालीद्रुमैः, ख० । १२. अभिरावताम् ख० । १३. नन्दति क० ।

अत्र आन्ध्रप्रदेशे कस्तूरीमृग[1] कर्पूरद्रुमादिसद्भाव इति देशविरुद्धत्वेऽपि नानाद्वीपाधीशसकाशादुपायनग्रहणसमर्थनायकप्रभाववर्णनविवक्षया गुणत्वम् ।

शब्दार्थरूपन्तदिदं काव्यं शब्दार्थकौविदैः ॥२२॥
त्रैविध्येन चमत्कारि[2] चमत्कारितरं यथा ।

चमत्कारितमञ्चेति प्रविविच्य[3] निर्दर्शितम् ॥२३॥
शब्दचारुत्वतात्पर्ये चमत्कारीति कथ्यते ।

यथा—

कमलमुकुलपालीकल्पिता[4]पानकेली
कलमधुकरमालाकाकलीकल्यनादैः[5] ।
सरसि सरसतीरे सारसारावसारे,
विहरति[6] भरितौद्य[7] राजशैलाधिराजः ॥४६

अत्रानुप्रासनिर्वहणमात्रे कविप्रयत्नस्य विश्रान्तेः शब्दमात्रचारुत्वा[8] दिदं काव्यं चमत्कारीत्युच्यते[9] ।

वाच्यचारुत्वतात्पर्ये चमत्कारितरं मतम् ॥२४॥

यथा—

श्रीसिङ्गक्षितिपाल तावकचमूधाटीभयाटीकिता[10],
नाकारैरपि शाबरैरपि हितान् घोराङ्गणे पङ्कणे[11] ।
आत्मीयैव हि पश्यतां पिशुनयत्याबालगोपालकं,
भूपालात्कु[12]लिशातपत्रकलशी[13] चिह्नापदानां ततिः ॥५०

अत्र कैतवकिरातानां प्रतिनायकानां कुलिशादिराजलक्षणलक्षित-

---

१. कस्तूरिमृग क० । २. चमत्कार ख० । ३. प्रवितिच्यसिर्दशितम् क० । ४. नन्विता ख० । ५. कल्पनार्थैः ख० । ६. विरहति ख० । ७. भरितौघः इत्युचितः । ८. चातुर्यत्वाद् क० । ९. चमत्कारि क० । १०. भयाटकितान् क० । ११. पङ्कणे-भिल्लवसतौ इत्यर्थः । १२. १३. कलशि क० ।

पदावलीपरिज्ञानेन यदि मे[1] राजान इत्यभ्यूहनं सोऽयमनुमानालंकारः। तत्रैव कविप्रयत्नस्य विश्रान्तिरिति वाच्यकाशस्मुल्लंघ्य वाच्यचारुत्व-तात्पर्यादिदं चमत्कारितरमित्युच्यते।

व्यङ्ग्यस्य च गुणीभावे तादेवाहुर्मनीषिणः।
इहोपसर्जनी[2] भूतमष्टधा व्यङ्ग्यमुच्यते ॥२५॥

तथा चाहुः—

अगूढमपरस्याङ्गं वाच्यसिद्ध्यङ्गमस्फुटम्।
सन्दिग्धतुल्यप्राधान्ये काक्वाक्षिप्तमसुन्दरम् ॥२६॥

अगूढव्यङ्ग्यं यथा—

कस्तूरीमृगयूथसेविततलैः कर्पूरपालिद्रुमै-[3]
रारामानभिरामतामुपगतानालोक्य राजाचले।
त्रिस्मेरा[4] हृदि पञ्चवर्णकशुकादाकर्ण्य कर्णोत्सवं,
श्रीसिङ्गक्षितिपालविक्रम[5]कलां नन्दन्त्य[6]पूर्वं जनाः ॥५१

अत्र विक्रमकलामित्यर्थशक्तिमूलस्य नानाद्वीपाधिप प्रहित[7]स्योपायनविशेषरूपस्य व्यङ्ग्यस्योपर्यद[8] प्रतिभानादिदम् अगूढव्यङ्ग्यन्नाम चमत्कारितरं काव्यम्।

अपराङ्गव्यङ्ग्यं यथा—

चूतालोकभिया निमीलितदृशो रञ्जन्ति[9] मार्गान्तरं,
बन्धूनाञ्च कुहूभिया[10] श्रुति[11] पुटानाकर्णयन्त्यो गिरः।
पान्थैर्भूतभिया पलायनपरैर्नविदिताध्वक्रमाः,
खिद्यन्ति[12] त्वदरिस्त्रियो वनभुवि श्रीसिङ्गपृथ्वीपते! ॥ ५२

---

१. मैका जान क०। २. इहेव सर्जनीभूताम् क०। ३. नवै कर्पूर-पलिद्रुमैः ख०। ४. विस्मेरो ख०। ५. कला क०। ६. नन्दति क०। ७. प्रहेतस्य क०। ८. अनुमीमहे अत्र 'एव" आसीत्। प्रतिलिपिकारेण भ्रान्तिवशाद् एव स्थाने एद लिखितः। ९. अञ्ज् व्यक्तिम्रक्षणकान्तिगतिषु इति धातोः रूपम्। क पुस्तकस्य रञ्जयन्ति पाठस्तु चिन्तनीयः। १०. कूहू भिया क०। ११: श्रुतिरध्रो ख। १२. मिद्यन्ति क०।

# रचना-सूची

